Bombay Sanskrit and Prakrit Series

No. XXIII

# THE VĀSIṢṬHADHARMAŚĀSTRAM

Price Rupee One

The Department of Public Instruction, Bombay.

Bombay Sanskrit and Prakrit Series No. XXIII.

---

# श्रीवासिष्ठधर्मशास्त्रम्.

# APHORISMS

ON THE

# SACRED LAW OF THE ĀRYAS,

AS TAUGHT IN

# THE SCHOOL OF VASIṢṬHA.

BY

REV. ALOIS ANTON FÜHRER, M. A., PH. D.

PROFESSOR OF INDIAN LANGUAGES, BÂLE.

---

1930

B. O. R. I. Institute, Poona.

*Price Rupee One*



TO

THE REVERED MEMORY OF THE LATE HOFRAT

PROFESSOR DR. GEORGE JOHANN BÜHLER, C. I. E.,

THIS WORK IS DEDICATED

AS A TOKEN OF ADMIRATION AND GRATITUDE

BY

HIS FORMER PUPIL,

THE EDITOR.

# CRITICAL INTRODUCTION.

The present edition of Vasiṣṭha's Dharmaśāstra is based on the following five fairly correct and complete manuscripts:—

(a) MS. B., Dekkhan College, Puṇa, Collection of 1874-75, No. 29, presented to Prof. Dr. Bühler by Prof. Bāla-śāstrī of Banāras, containing 30 chapters, and written on 27 leaves, à 8 lines, à 54-56 aksharas, dated saṁvat 1745.

(b) MS. Bh., Dekkhan College, Puṇa, Collection of 1874-75 No. 30, presented to Prof. Bühler by Dāmodara Śāstrī of Bhūj, containing 30 chapters, and written on 36 leaves, à 10 lines, à 34-36 aksharas, dated saṁvat 1599.

(c) MS. E, Elphinstone College, Bombay, Collection of 1867-68, No. 23 of Class VI., Containing 30 Chapters, and written on 25 leaves. à 14 lines, à 34-36 akṣaras dated saṁvat 1799.

(d) MS. F., an imperfect apograph, prepared under the superintendence of Prof Dr. Bühler, C. I. E., by Vāmanāchārya Zhalkīkar, now teacher of Sanskrit in the Dekkhan College, Puṇa, belonging to Prof. Dr. Bühler, Vienna, containing 30 chapters on 115 pages à 16 lines, à 14-16 aksharas, dated saṁvat 1921.

(e) MS. H., belonging to Dr. Bhāu Dāji's Memorial, containing 28 complete chapters, leaving the 29th incomplete and written on 51 leaves, à 12 lines, à 28-30 aksharas. dated saṁvat 1713.

MSS. B., Bh., E. and H. belong to one and the same family All four are derived from one *codex archetypus*, to which B., stands the nearest. B. has been corrected in different passages *secunda manu* with the help of a manuscript which apparently agreed with none of Bh., E., F. and H. Next in rank comes

Bh., and lowest in the scale stands E., the text of which shows many faults and omissions. As regards the remaining manuscript, in F. occur some different readings and old marginal glosses.

The full collection of *variæ lectiones*, given under the text, which are contained in the five MSS., with the exception of palpable mistakes of the copyists, makes it superfluous to enter on a discussion of the details.

Regarding the division of Sūtras, B. has been followed, which division answers exactly to that observed by Prof. Dr. Bühler in his translation of Vasiṣṭa's Dharmaśāstra, published 1882 in the 14th volume of M. Müller's "Sacred Books of the East."

The Appendix gives a collection of quotations from Vasisṭha's Dharmaśāstra as found in Vijñāneśvara's Mitākśarā, Aparārka's Yājñavalkīyadharmaśāstranibandha, Nandapaṇḍita's Vaijayanti, Devāṇdabhaṭṭa's Smṛitichandrikā, Nīlakaṇṭha's Vyavahāramayūkha, and Mitramiśra's Vīramitrodaya.

The Vāsishṭhadharmaśāstram has been published twice in Calcutta and once in Banāras. The two Calcutta editions, the second of which is a bad reprint of the first by Jibānanda Vidyāsāgara, in 1876, (Calc. ed.), are perfectly useless, as they are based on a single faulty manuscript, now preserved in the India Office Library at London (J.O.913), which contains only 21 chapters. The Banāras edition is based on better materials, and accompanied by an useful commentary, called Vidvanmodinī, composed and edited by Krishṇapaṇḍita Dharmâdhikārin, śāke 1781, a learned Paṇḍit of the old school; but unfortunately the editor has corrected the text (MS. B.) very freely, without marking his conjectures as such (Ban. ed.).

In conclusion I have to express my sincerest thanks to Prof. Dr. Bühler, who has kindly placed at my disposal all the materials collected during his stay in India for preparing a critical and really trustworthy edition of Vasisṭha's Dharmaśāstra, of one of the four-most ancient works on Hindu Law.

# PREFACE.

Ever since the first edition of Vasiṣṭha's Dharmaśâ'stra appeared in 1883, I have tried in vain to obtain some new and still more reliable Mss., being quite independent of those already known, or some old commentary on this difficult lawbook. During my Archæological tour through Râjjputâna in 1892-93 I came across in the library of Śâstri Śrînivâsji Keśavadevji at Kotah an old manuscript (named K. in the present edition), dated Saṃvat 1410. which offers a few better, well-marked and widely varying readings, thus furnishing new materials for settling some of the much debated points of the established text. I am, however, painfully conscious of the many corrupt passages still remaining and awaiting further elucidation; but I offer the carefully revised text to Oriental scholars as an honest attempt to enable the student to read a difficult Sanskrit work which will well repay the trouble of mastering it. As long as no new information can be furnished regarding the school of the Ṛigveda, to which the Vāśishṭhadharmaśaātra belongs, and referring to the usage of language prevailing at that school, it would be most hazardous to venture on the introduction of any emendations in the text.

BĀLE ( SUISSE ), *the 10th June 1914.*

A. A. F.

# ॥ अथ श्रीवासिष्ठधर्मशास्त्रानुक्रमणिका ॥

# ॥ अथ श्रीवासिष्ठधर्मशास्त्रं प्रारभ्यते ॥

अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा ॥ १ ॥

ज्ञात्वा चानुतिष्ठन्धार्मिकः ॥ २ ॥

प्रशस्यतमो भवति लोके प्रेत्य च स्वर्गलोकं समश्नुते ॥ ३ ॥

श्रुतिस्मृतिविहितो धर्मः ॥ ४ ॥

तदलाभे शिष्टाचारः प्रमाणम् ॥ ५ ॥

शिष्टः पुनरकामात्मा ॥ ६ ॥

अगृह्यमाणकारणो धर्मः ॥ ७ ॥

आर्यावर्तः प्रागादर्शात्प्रत्यक्कालकवनादुदक्पारियात्राद्दाक्षिणेन हि-
मवतः ॥ ८ ॥

उत्तरेण च विन्ध्यस्य ॥ ९ ॥

तस्मिन्देशे ये धर्मा ये चाचारास्ते सर्वत्र प्रत्येतव्याः ॥ १० ॥

न त्वन्ये प्रतिलोमकधर्माणाम् ॥ ११ ॥

---

I. 2. ज्ञात्वानुतिष्ठन्ध° B. ज्ञात्वानुष्ठानेन ध° Bh. 7. thus B. Bh. E. F; but Ban. ed. अगृह्यमाणकारणोऽधर्मः 8. Bh. E. F. and Ban. ed. read प्रागादर्शनात् instead of प्रागदर्शनात् as rendered by Prof. Bühler in his translation of this passage. B.reads प्रागादर्शात् as Patañjali on Pāṇini II. 4. 10. °कालकाद्वनादु° B. Baudhāyana's Dharmasūtra I., 1, 2, 9. quotes the following definition of the Āryāvarta: प्राग्विनशनात्प्रत्यक्कालकाद्वनाद्दाक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्यावर्तम् ॥ 11. न ह्यन्ये प्रतिलोमकक्षधर्माणः Bh. E. प्रतिलोमकल्पधर्माणः F. H. प्रतिलोम-कल्पधर्माः Calc. ed.

गङ्गायमुनयोरन्तरेप्येके ॥ १२ ॥

यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसमित्यन्ये ॥ १३ ॥

अथापि भाल्लविनो निदाने गाथामुदाहरन्ति ॥ १४ ॥

पश्चात्सिन्धुर्विधारणी सूर्यस्योदयनं पुरः ।
यावत्कृष्णोभिधावति तावद्वै ब्रह्मवर्चसमिति ॥ १५ ॥

त्रैविद्यवृद्धा यं ब्रूयुर्धर्मं धर्मविदो जनाः ।
पवने पावने चैव स धर्मो नात्र संशय इति ॥ १६ ॥

देशधर्मजातिधर्मकुलधर्मान्श्रुत्यभावादब्रवीन्मनुः ॥ १७ ॥

सूर्याभ्युदितः सूर्याभिनिम्रुक्तः कुनखी श्यावदन्तः परिवित्तिः परिवेत्ताग्रेदिधिषूर्दिधिषूपतिर्वीरहा ब्रह्मोज्झ इत्येनास्विनः ॥१८॥

पञ्च महापातकान्याचक्षते ॥ १९ ॥

गुरुतल्पं सुरापानं भ्रूणहत्या ब्राह्मणसुवर्णापहरणं पतितसंयोगश्च ॥ २० ॥

ब्राह्मेण वा यौनेन वा ॥ २१ ॥

---

12. B. and Ban. ed. read this Sūtra: एतदार्यावर्तमित्याचक्षते गङ्गायमुनयोरन्तरेप्येके । Bh. joins the first four words with Sūtra 11. Most likely the words एतदार्यावर्तमित्याचक्षते belong originally to Sūtra 8 according to the above-mentioned reading of Baudhāyana, and are here a mistake of the copyists Therefore Sūtra 8 ought probably to be corrected thus: प्रागादर्शात् [or प्रागदर्शनात्] प्रत्यक्कालकवनादुदक्पारियात्राद्दक्षिणेन हिमवत एतदार्यावर्तमित्याचक्षते ॥ 13. °ब्रह्मावर्तम् B. Bh. E. 14. भाल्लविभो Bh. 15. °विधरणी° B. Bh. H. °विहारिणी F. पुरा F. H. पुनः E. यावत्कृष्णमृगो धावति तावद्ब्रह्मवर्चसमिति । B. Bh. H. 16. एतेन पावने Bh. यजने पावने E, F. पवनं पावनं चैव K. 18. सुर्याभ्युदयितः B. H. °वीजहा ब्रह्मघ्नः Calc. ed. 20. सुवर्णहरणम् E. F. सुवर्णापहरणम् Ban. ed. °संप्रयौगश्च E.

अथाप्युदाहरन्ति ।
संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाद्दानादिति ॥ २२ ॥
योग्नीनपविध्येद्गुरुं च यः प्रतिदघ्नुयान्नास्तिको नास्तिकवृत्तिः सोमं च विक्रीणीयादित्युपपातकानि ॥ २३ ॥
तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्वेण द्वे राजन्यस्य एकैका वैश्य-शूद्रयोः ॥ २४ ॥
शूद्रामप्येके मन्त्रवर्जं तद्वत् ॥ २५ ॥
तथा न कुर्यात् ॥ २६ ॥
अतो हि ध्रुवः कुलापकर्षः प्रेत्य चास्वर्गः ॥ २७ ॥
षड्विवाहाः ॥ २८ ॥
ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति ॥ २९ ॥
इच्छत उदकपूर्वं यां दद्यात्स ब्राह्मः ॥ ३० ॥
यज्ञतन्त्रे वितत ऋत्विजे कर्म कुर्वते कन्यां दद्यादलंकृत्य तं दैवमित्याचक्षते ॥ ३१ ॥
गोमिथुनेन चार्षः ॥ ३२ ॥
सकामां कामयमानः सदृशीं योनिमुह्यात्स गान्धर्वः ॥ ३३ ॥
यां [ बलेन सहसा प्रमथ्य ] हरन्ति स क्षात्रः ॥ ३४ ॥
[ पणित्वा धनक्रीतां ] स मानुषः ॥ ३५ ॥
तस्माद्दुहितृमतेधिरथं शतं देयमितीह क्रयो विज्ञायते ॥ ३६ ॥

---

22. अथाभ्युदाहरन्ति. F. पानाशनादिति B. यानासनादिति Ban. ed. यानाशनादिति Bh. H. °यौनादन्नपानासनादपि Calc. ed. Compare Viṣṇu-smṛti. xxxv, 3.-5. and Baudhāyana II,2,35.23. प्रतिजह्नुयात् B. Bh. F., प्रतिजोह्नुयात् K.नास्तिक्यवृत्तिः। Bh. H. 24.Bh. omits वर्णानुपूर्वे until न कुर्यात्। 25. तद्वत्तथा. Ban. ed. 26. तथानुकुर्यात् E. 27. अस्वर्ग्यः Bh F. H. 30. पूर्वां Bh. स च B. 31. यं B. Bh. 32. चार्यः Bh. 34.and 35. the passages in brackets are probably glosses. 35. धनीक्रीतामि Bh.H

या पत्युः क्रीता सत्यथान्यैश्चरतीति ह चातुर्मास्येषु ॥ ३७ ॥
अथाप्युदाहरन्ति ।

विद्या प्रनष्टा पुनरभ्युपैति
कुलप्रणाशे त्विह सर्वनाशः ।
कुलापदेशेन हयोपि पूज्य-
स्तस्मात्कुलीनां स्त्रियमुद्वहन्तीति ॥ ३८ ॥

त्रयो वर्णा ब्राह्मणस्य निर्देशेन वर्तेरन् ॥ ३९ ॥
ब्राह्मणो धर्मान्प्रब्रूयात् ॥ ४० ॥
राजा चानुशिष्यात् ॥ ४१ ॥
राजा तु धर्मेणानुशासन्षष्ठं धनस्य हरेत् ॥ ४२ ॥
अन्यत्र ब्राह्मणात् ॥ ४३ ॥
इष्टापूर्तस्य तु षष्ठमंशं भजतीति ह ॥ ४४ ॥
ब्राह्मणो वेदमाढ्यं करोति ब्राह्मण आपद उद्धरति तस्माद्ब्राह्मणो-नाद्यः । सोमोस्य राजा भवतीति ह ॥ ४५ ॥
प्रेत्य चाभ्युदयिकमिति ह विज्ञायते ह विज्ञायत इति ॥ ४६ ॥

॥ इति वासिष्ठधर्मशास्त्रे प्रथमोध्यायः ॥ १ ॥

---

37. चातुर्मास्येष्वथाप्युदाहरन्ति Ban. ed. Maitrāyaṇiyasaṁhitā I., 10, 11 and Kāṭhaka xxxvi., 5 read: अनृतं वा एषा करोति या पत्युः क्रीता सत्यथान्यैश्चरति s. Bühler's Transl. 38. विद्याविनाशे Calc. ed. जातिप्रणाशे E. F. Calc. ed. हया अपि पूज्याः Bh. H. °उद्वहेदिति Bh. H 39. वशे instead of निर्देशेन E. F. Calc. ed. 40 तेषां ब्राह्मणो E. F.41. अनुतिष्ठेत E. 42. All MSS. read अनुशासन् । षष्टं षष्टं धनस्य E. 43. अन्यद्ब्राह्मणात् E. F. 44. अंशं हरति E. F. 45. Ban. ed divides this Sūtra into four, but wrongly. तस्माद्ब्राह्मणो रायः B. E. H. भेदमाद्यं करोति Bh. E F. H.

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ १ ॥

त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः ॥ २ ॥

तेषाम् ऽधिजननमिति मानवे पाठः।

मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धने ।

अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ३ ॥

वेदप्रदानात्पितेत्याचार्यमाचक्षते ॥ ४ ॥

तथाप्युदाहरन्ति ।

द्वयमुह वै पुरुषस्य रेतो ब्राह्मणस्योर्ध्वं नाभेरधस्तादवाचीनमन्यत्त-द्यदूर्ध्वं नाभेस्तेन हैतत्प्रजा जायते यद्ब्राह्मणानुपनयति यदध्यापयति यद्याजयति यत्साधुकरोति । अथ यदवाचीनं नाभेस्तेनेहास्यौरसी प्रजा जायते। तस्माच्छ्रोत्रियमनूचानमप्रजोसीति न वदन्तीति ॥५॥

हारीतोप्युदाहरति ।

न ह्यस्मिन्विद्यते कर्म किंचिदा मौञ्जिबन्धनात् । युज्यते इति तु मानवे।

वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायत इति ॥ ६ ॥

अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्यः ॥ ७ ॥

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिस्तेहमस्मि ।
असूयकायानृजवेयताय
न मां ब्रूया वीर्यवती तथा स्याम् ॥ ८ ॥

---

II. 3. मातुरग्रेधिजननम् E. F. तेषां मातुरग्रे जन्म Bh. तत्रास्य E. F. 5. °उदाहरति Ban. ed. अथाप्युदाहरति E. F; द्वयमिह C. ed. B. gives of पुरुषस्य the marginal gloss सुश्रवसोऽनूचानस्य । °अर्वाचीनं C.ed. 6. °समो ज्ञेयो E. F. यावद्वेदो Ban. ed. 7. अन्यदैवोदक° E. F. 8. सेवधिः Bh. °अनृजवेऽव्रताय C. ed. comp., Nir. 24; Viṣṇus. 29. 9; Saṁhitopan. 29, 8 ff.

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्चनाहस्तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥ ९ ॥

य आतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कतमच्चनाहः ॥ १० ॥

अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीया-
स्तथैव तान्न भुनक्ति श्रुतं तत् ॥ ११ ॥

दहत्यग्निर्यथा कक्षं ब्रह्म पृष्टमनादृतम् ।
न ब्रह्म तस्मै प्रब्रूयाच्छक्यं मानमकुर्वत इति ॥ १२ ॥

षट् कर्माणि ब्राह्मणस्य ॥ १३ ॥

स्वाध्यायाध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहश्चेति ॥ १४ ॥

त्रीणि राजन्यस्य ॥ १६ ॥

अध्ययनं यज्ञो दानं च ॥ १६ ॥

शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत् ॥ १७ ॥

---

9. प्रमत्तं instead of अप्रमत्तम् Ban. ed.
10. य आतृणोत्यवितथेन...
...................... ।
तं वै मन्योत्पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥
Visṇusmṛti 30, 47 (ed. by J. Jolly, Calc. 1881). Comp. also Nir. 2,4; Saṁhitopan. 32, 1.ff. 35, 10 ff; Rigveda 10, 168, 3 and 10, 128, 4, A.v. 5, 3,4; Av. 9, 2, 10. Śat. Br. 11, 1, 6, 10. Apastamba 1, 1, 14. 12. त्वन्द्मनादृतं C. ed. 13. Ban. ed. connects wrongly ब्राह्मणस्य with Sūtra 14. याजनं instead of यज्ञो F. दानं omits by mistake Ban. ed. 16. यजनं instead of यज्ञो F

एतान्येव वैश्यस्य ॥ १८ ॥
कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च ॥ १९ ॥
तेषां परिचर्या शूद्रस्य नियता च वृत्तिः ॥ २० ॥
नियतकेशवेषाः सर्वे वा मुक्तकेशाः शिखावर्जम् ॥ २१ ॥
अजीवन्तः स्वधर्मेणानन्तरां यवीयसीं वृत्तिमातिष्ठेरन् ॥ २२ ॥
न तु कदाचिज्ज्यायसीम् ॥ २३ ॥
वैश्यजीविकामास्थाय पण्येन जीवतोऽश्मलवणमणिशाणकौशेयक्षौमाजिनानि च ॥ २४ ॥
तान्तवं रक्तं सर्वं च ॥ २५ ॥
कृतान्नं पुष्पफलमूलानि गन्धरसा उदकं चौषधीनां रसः सोमश्च शस्त्रं विषं मांसं च क्षीरं च सविकारमयस्त्रपु जतु सीसं च ॥२६॥
अथाप्युदाहरन्ति ।
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयादिति ॥ २७ ॥
ग्रामपशूनामेकशफाः केशिनश्च सर्वे चारण्याः पशवो वयांसि दंष्ट्रिणश्च ॥ २८ ॥
धान्यानां तिलानाहुः ॥ २९ ॥
अथाप्युदाहरन्ति ।
भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जतीति ॥ ३० ॥

---

18 एतान्येव त्रीणि B. F. H. 20. तेषां च B. Ban. ed. 21. °वेशाः E. F. H. च मुक्तकेशाः F. चामुक्तकेशः E.22. पापीयसीं F. 23. न कदाचित् B. Ban. ed. H. 24. K. reads अपण्यं instead of अश्म; comp. also Baudhāyana II, 4, 21. 26. पुष्पमूलफलानि च F. पुष्पमूलफलगन्धरसाः Bh. चौषधीनां F. क्षीरं सविकारम्° Bh. 28. चारण्याः B. F. 29. Ban. ed. wrongly connects this Sūtra with the preceding one. 30. °दानादन्यद्यत्कुरुते B. Ban. ed. मज्जत इति B. Ban. ed. H, compare also Baudh. II, 2, 29 and Manu. 10, 91.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कामं वा स्वयं कृष्योत्पाद्य तिलान्विक्रीणीरन् ॥ ३१ ॥

तस्मात्साण्डाभ्यामनस्योताभ्यां प्राक्प्रातराशात्कर्षी स्यात् ॥ ३२॥

निदाघेपः प्रयच्छेत् ॥ ३३ ॥

लाङ्गलं पवीरवत्सुशेव ँ सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनमिति ॥ ३४ ॥

[ लाङ्गलं पवीरवद्वीरवत्सुमनुष्यवदनडुद्वत्सुशेवं कल्याणनासिकं कल्याणी ह्यस्य नासिका नासिकथोद्वपति दूरेपविध्यति सोमपित्सरु सोमो ह्यस्य प्राप्नोति तत्सरु तदुद्वपति गां चाविं चाजानश्वानश्वतरखरोष्ट्रांश्च प्रफर्व्यं च पीवरीं दर्शनीयां कल्याणीं च प्रथमयुवतीम् ॥ ३५ ॥ ]

कथं हि लाङ्गलमुद्वपेदन्यत्र धान्यविक्रयात् ॥ ३६ ॥

रसा रसैर्महतो हीनतो वा विमातव्याः ॥ ३७ ॥ विमातव्या इति पाठः स्यात्

न त्वेव लवणं रसैः ॥ ३८ ॥

तिलतण्डुलपक्वानं विद्या मानुष्याश्च विहिताः परिवर्तकेन ॥ ३९ ॥

ब्राह्मणराजन्यौ वार्धुषी न दद्याताम् ॥ ४० ॥

अथाप्युदाहरन्ति ।

समर्घं धान्यमुद्धृत्य महार्घं यः प्रयच्छति ।

स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥ ४१ ॥

ब्रह्महत्यां च वृद्धिं च तुलया समतोलयत् ।

अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत इति ॥ ४२ ॥

---

31. Ban.ed.omits स्वयम् । 32. तस्माच्छण्डाभ्यां Bh.तस्माद्धाण्डाभ्यामनस्यूताभ्यां B. E. Comp. Baudh. II, 4, 21. 33. प्रयच्छेन्नातिपीडयन् E F. 34.प्रवीरवत् गामवीं F. 35. This Sūtra explaining the preceding Vedic verses seems to be an interpolation 39.मानुषाश्च Ban. ed. मनुष्याश्च F. 40. वार्धुषिं B. Ban. ed. F. 42. भ्रूणहत्यां B. Ban. ed.H.

कामं वा परिलुप्तकृत्याय पापीयसे दद्याताम् ॥ ४३ ॥
द्विगुणं हिरण्यं त्रिगुणं धान्यम् ॥ ४४ ॥
धान्येनैव रसा व्याख्याताः ॥ ४५ ॥
पुष्पमूलफलानि च ॥ ४६ ॥
तुलाधृतमष्टगुणम् ॥ ४७ ॥
अथाप्युदाहरन्ति ।
द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं स्मृतम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ ४८ ॥
राजा तु मृतभावेन द्रव्यवृद्धिं विनाशयेत् ।
पुनाराजाभिषेकेण द्रव्यमूलं च वर्धते ॥ ४९ ॥
वसिष्ठवचनप्रोक्तां वृद्धिं वार्धुषिके शृणु ।
पञ्च माषास्तु विंशत्या एवं धर्मो न हीयत इति ॥
न हीयत इति ॥ ५० ॥

॥ इति वासिष्ठधर्मशास्त्रे द्वितीयोध्यायः ॥ २ ॥

---

अश्रोत्रिया अननुवाक्या अनग्नयो वा शूद्रसधर्माणो भवन्ति ॥१॥
मानवं चात्र श्लोकमुदाहरन्ति
योनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २ ॥
नानृग्ब्राह्मणो भवति न वणिङ्न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥ ३ ॥

---

43. परिलुप्तात्पाय F. 48. °आनुपूर्वशः B. Bh. E. 49. भृतिभावेन B. Ban. ed. विभाजयेत् F. °अभिषिक्तेन B. अभीषिक्तेण Ban. ed. तु instead of च B. III. 1. शूद्रकर्माणः B. Ban. ed वा omit F. H. 3. °प्रेषयां E. F.

अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ॥ ४ ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ५ ॥

यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः ।
तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति ॥ ६ ॥

चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ ७ ॥

श्रोत्रियाय च देयानि हव्यकव्यानि नित्यशः ।
अश्रोत्रियाय दत्तं हि पितॄन्नैति न देवताः ॥ ८ ॥

यस्य चैकगृहे मूर्खो दूरे वापि वहुश्रुतः ।
वहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ९ ॥

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ १० ॥

यश्च काष्ठमयो हस्ती यश्च चर्ममयो मृगः ।
यश्च विप्रोनधीयानस्त्रयस्ते नामधारकाः ॥ ११ ॥

विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयमिति ॥ १२ ॥

अप्रज्ञायमानं वित्तं योधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय १३
ब्राह्मणश्चेदधिगच्छेत्षट्सु कर्मसु वर्त्तमानो न राजा हरेत् ॥ १४ ॥

---

4. अत्रात्या F. चोरभक्त° E. 6. धर्ममतद्विदुः F. H. अनुगच्छाति B. E. H. तद्वक्रं न तु गच्छति F. अजानन्तः F. K. 7. चत्वारोपि F. नेतरेषां कदाचन F. 8. श्रोत्रियायेव F. H. 9. चैव गृहे F. 9. and 10., comp. Baudh. I. 10, 27, 11. यथा instead of यश्च B.

आततायिनं हत्वा नात्र प्राणच्छेत्तुः किञ्चित्किल्बिषमाहुः ॥ १५ ॥

अथाप्युदाहरन्ति ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ १६ ॥

आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ १७ ॥

स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छतीति ॥ १८ ॥

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णश्चतुर्मेधा वाजसनेयी षडङ्गविद्ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगो मन्त्रब्राह्मणविद्यश्च धर्मानधीते यस्य च दशपुरुषं मातृपितृवंशः श्रोत्रियो विज्ञायते विद्वांसः स्नातकाश्चैते पङ्क्तिपावना भवन्ति ॥ १९ ॥

चातुर्विद्यं विकल्पी च अङ्गविद्धर्मपाठकः ।
आश्रमस्थास्त्रयो मुख्याः पर्षदेषां दशावरा ॥ २० ॥

उपनीय कृत्स्नं वेदमध्यापयेत्स आचार्यः ॥ २१ ॥

यस्त्वेकदेशं स उपाध्यायः ॥ २२ ॥

यश्च वेदाङ्गानि ॥ २३ ॥

आत्मत्राणे वर्णसंवर्गे ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् ॥ २४ ॥

क्षत्रियस्य तु तन्नित्यमेव रक्षणाधिकारात् ॥ २५ ॥

---

15. After that Sūtra F. only reads षड्विधा ह्याततायिनः 17 वेदान्तगं रणे B. Ban ed. वेदान्तिगं रणे Vir. p. 6; comp. also Mahābhāratam XII, 34, 17. 18. न तेन भ्रूणहा भवति मन्युस्तन्मन्युमृच्छति B. H. 19. त्रिनाचिकेत्तः B. H. 20. चातुर्वैद्यस्त्रिकल्पी च Ban. ed. चातुर्वैद्यं विकल्पी च Baudhāyana I. 1. 8. विकल्पे च Bh. दशावरेति B. H. 21. उपनीय यः B. Bh. H. उपनीय तु यः F. 24. वर्णसंवर्गे वा B. धर्मसंवर्गे E. H. वर्णसङ्करे वा F.

प्रक्षाल्य पादौ पाणी चा मणिबन्धात्प्राग्वोदग्वासीनोऽङ्गुष्ठमूलस्यो-
त्तररेखा ब्राह्मं तीर्थं तेन त्रिराचामेदशब्दवत् ॥ २६ ॥
द्विः परिमृजीत ॥ २७ ॥
खान्यद्भिः संस्पृशेत् ॥ २८ ॥
मूर्धन्यपो निनयेत्सव्ये च पाणौ ॥ २९ ॥
व्रजंस्तिष्ठञ्छयानः प्रणतो वा नाचामेत् ॥ ३० ॥
हृदयङ्गमाभिरद्भिरबुद्बुदाभिरफेनाभिर्ब्राह्मणः ॥ ३१ ॥
कण्ठगाभिस्तु क्षत्रियः ॥ ३२ ॥
वैश्योऽद्भिः प्राशिताभिः ॥ ३३ ॥
स्त्रीशूद्रं स्पृष्टाभिरेव च ॥ ३४ ॥
प्रदरादपि या गोस्तर्पणसमर्थाः स्युः ॥ ३५ ॥
न वर्णगन्धरसदुष्टाभिर्याश्च स्युरशुभागमाः ॥ ३६ ॥
न मुख्या विप्रुष उच्छिष्टं कुर्वन्त्यनङ्गस्पृष्टाः ॥ ३७ ॥
सुप्त्वा भुक्त्वा क्षुत्वा पीत्वा रुदित्वा स्नात्वा चान्तः पुनराचामे-
द्वासश्च परिधाय ॥ ३८ ॥
ओष्ठौ संस्पृश्य यत्रालोमकौ ॥ ३९ ॥
न श्मश्रुगतो लेपः ॥ ४० ॥
दन्तवद्दन्तसक्तेषु यच्चान्तर्मुखे भवेन्निगिरन्नेव तच्छुचिरिति ॥ ४१ ॥
परानप्याचामयतः पादौ या विप्रुषो गताः ।
ताभिर्नोच्छिष्टतां यान्ति भूम्यास्तास्तु समाः स्मृताः ॥ ४२ ॥

---

26. °उत्तरतो रेखा B. F. H. ब्राह्यं E. त्रिराचामेत्° Ban. ed. Most probably it has to be read आसीनो ब्राह्मतीर्थेन त्रि° as the nominatives अङ्गुष्ठमूलस्योत्तररेखा are undoubtedly added by interpolation. 27 परिमृज्यात् F. 28. खान्यद्भिरद्भिः B. H. 32. क्षत्रियः शुचिः F. H. 33. प्राशिताभिस्तु. B. F. H. 34. एव तु B. H. 35. यो गोस्तर्पणा. Bh. E. H. 38. चास्वान्तः F. 39. अलोमकौ. Bh. E. 4.. यच्चाप्यन्तर्मुखे B. H. अन्तर्मुखी Bh. भवेदाचान्तस्यानिगिरन्नेव तच्छुचिः F. 42. परानन्यानाचामयत B. ed. भूम्यास्तास्त्र. F. H.

चरन्नभ्यवहारेषु उच्छिष्टं यदि संस्पृशेत् ।
भूमौ निधाय तद्द्रव्यामाचम्य प्रचरेत्पुनः ॥ ४३ ॥
यद्यन्मीमांस्यं स्यादद्भिः संस्पृशेत् ॥ ४४ ॥
श्वहताश्च मृगा वन्याः पातितं च खगैः फलम् ।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् ॥ ४५ ॥
प्रसारितं च यत्पण्यं ये दोषाः स्त्रीमुखेषु च ॥ ४६ ॥
मशकैर्मक्षिकाभिश्च निलीनैर्नोपहन्यते ।
क्षितिस्थाश्चैव या आपो गवां तृप्तिकराश्च याः ।
परिसंख्याय तान्सर्वाञ्शुचीनाह प्रजापतिरिति ॥ ४७ ॥
लेपगन्धापकर्षणे शौचममेध्यलिप्तस्याद्भिर्मृदा च ॥ ४८ ॥
तैजसमृन्मयदारवतान्तवानां भस्मपरिमार्जनप्रदाहनतक्षणधावनानि ॥ ४९ ॥
तैजसवदुपलमणीनाम् ॥ ५० ॥
मणिवच्छङ्खशुक्तीनाम् ॥ ५१ ॥
दारुवदस्थ्नाम् ॥ ५२ ॥
रज्जुविदलचर्मणाश्चैलवच्छौचम् ॥ ५३ ॥
गोवालैः फलमयानाम् ॥ ५४ ॥
गौरसर्षपकल्केन क्षौमजानाम् ॥ ५५ ॥
भूमेस्तु संमार्जनोपलेपनोल्लेखनप्रोक्षणोपकरणैर्यथास्थानं दोषविशेषात्प्रायत्यमुपैति ॥ ५६ ॥
अथाप्युदाहरन्ति ।
खननाद्दहनाद्धर्षाद्गोभिराक्रमणादपि ।
चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोपलेपनात् ॥ ५७ ॥

---

43. प्रच° H. प्रचरन्त्व्यवहार्येषु F. 44. स्यात्तदाद्भिः B. E. 46. निलीनं F. निलन्तं E. H. 49. °रवतां नवानां H, °प्रदाहतक्ष° B. F. °प्रदाहलक्ष°. H. 51. शुक्तीनां. H. 56. भूमिं तु F. H. 57. वर्षात् F. H. °गोमिभिराक्र° H.

रजसा शुध्यते नारी नदी वेगेन शुध्यते ।
भस्मना शुध्यते कांस्यं पुनःपाकेन मृन्मयम् ॥ ५८ ॥
मद्यैर्मूत्रैः पुरीषैर्वा श्लेष्मपूयाश्रुशोणितैः ।
संस्पृष्टं नैव शुध्येत पुनःपाकेन मृन्मयम् ॥ ५९ ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यतीति ॥ ६० ॥

अद्भिरेव काञ्चनं पूयते ॥ ६१ ॥

तथा रजतम् ॥ ६२ ॥

ताम्रमम्लेन शुध्यति ॥ ६३ ॥

अङ्गुलिकनिष्ठिकामूले दैवं तीर्थम् ॥ ६४ ॥

अङ्गुल्यमृषीणाम् ॥ ६५ ॥

अङ्गुल्यग्रेषु मानुषम् ॥ ६६ ॥

पाणिमध्य आग्नेयम् ॥ ६७ ॥

प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम् ॥ ६८ ॥

रोचत इति सायंप्रातरशनान्यभिपूजयेत् ॥ ६९ ॥

स्वदितमिति पित्र्ये ॥ ७० ॥

संपन्नमित्याभ्युदयिकेष्वाभ्युदयिकेष्वेति ॥ ७१ ॥

इति वासिष्ठधर्मशास्त्रे तृतीयोध्यायः ॥ ३ ॥

---

58. °कांश्यं ताम्रामम्लेन शुध्याति. F. 59. पुरीषैश्च B. H. 68. प्रादेशिनि° P. H. 69. प्रातरग्नीन्यभि°. F. 70. पित्र्येषु. F.

प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च ॥१॥

ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ।
उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ।
इत्यपि निगमो भवति ॥२॥

गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते ॥३॥

सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननं च ॥४॥

पितृदेवतातिथिपूजायामप्येव पशुं हिंस्यादिति मानवम् ॥५॥

मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनुः ॥६॥

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्माद्यागे वधोवधः ॥७॥

अथापि ब्राह्मणाय वा राजन्याय वाभ्यागताय महोक्षाणं वा महाजं वा पचेदेवमस्मा आतिथ्यं कुर्वन्तीति ॥८॥

उदकक्रियाशौचं च द्विवर्षं प्रभृति ॥९॥

आ दन्तजननादित्येके ॥ १० ॥

शरीरमग्निना संयोज्यानवेक्षमाणा अपोभ्यवयन्ति ॥ ११ ॥

सव्येतराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्नयुग्मासु दक्षिणामुखाः ॥ १२ ॥

पितॄणां वा एषा दिग्या दक्षिणा ॥ १३ ॥

गृहान्व्रजित्वा प्रस्तरे त्र्यहमनश्नन्त आसीरन् ॥ १४ ॥

---

IV. 3. असंज्ञारो H. 4. प्रजनं च. F. H. 5. °देवाति° H. 8. यवेदे° H. °आदित्यं. H. 9. द्विवर्षात्प्रभृति. F. 11. अपो नयन्ति F. अनपेक्ष्यमाणाः E. H. 12. सव्योत्तराभ्यां B. F. H. कुर्वन्त्ययुग्मा दक्षि° F. कुर्वीरन्नयुग्मा दक्षिणा मुख्यः H. 14. प्रस्तारे E. H.

अशक्तौ क्रीतोत्पन्नेन वर्तेरन् ॥ १५ ॥
दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥ १६ ॥
सपिण्डत्वं साप्तपुरुषं विज्ञायते ॥ १७ ॥
प्रत्तानां च स्त्रीणां त्रिपुरुषं विज्ञायते ॥ १८ ॥
प्रत्तानामितरे कुर्वीरंस्ताश्च तेषाम् ॥ १९ ॥
जननेप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ २० ॥
मातापित्रोर्वा ॥ २१ ॥
तन्निमित्तत्वान्मातुरित्येके ॥ २२ ॥
अथाप्युदाहरन्ति ।
नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यत इति ॥ २३ ॥
तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन् ॥ २४ ॥
रात्रिशेषे द्वाभ्याम् ॥ २५ ॥
प्रभाते तिसृभिः ॥ २६ ॥
ब्राह्मणो दशरात्रेण ॥ २७ ॥
पञ्चदशरात्रेण राजन्यः ॥ २८ ॥
विंशतिरात्रेण वैश्यः ॥ २९ ॥
शूद्रो मासेन शुध्यति ॥ ३० ॥
अथाप्युदाहरन्ति ।
अशौचे यस्तु शूद्रस्य सूतके वापि भुक्तवान् ।
स गच्छेन्नरकं घोरं तिर्यग्योन्यां च जायते ॥ ३१ ॥

---

17. सापिण्डः सप्तपुरुषं. F. H. 18. अप्रत्तानां B. H. 19. B. ed. omits ताश्च तेषां which Sūtra all my MSS. have. 20. जननेप्येवमेव निपुणां F. 23. संसर्गे नैव F. अशुभिर्भवति तच्च पुंसि न H. Bh. 28. भूमिपः F. 31. जायत इति. F. H.

अनिर्दशाहे परशवे नियोगाद्भुक्तवान्द्विजः ।
क्रमिर्भूत्वा स देहान्ते तां विष्ठां समुपाश्नुत इति ॥ ३२ ॥
द्वादश मासान्द्वादशार्धमासान्वानश्नन्संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते ॥३३॥
ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमाशौचम् ॥ ३४ ॥
सद्यः शौचमिति गौतमः ॥ ३५॥
देशान्तरस्थे प्रेत ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमाशौचम् ॥ ३६ ॥
आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति गौतमः ॥ ३७ ॥
यूपचितिश्मशानरजस्वलासूतिकाशुचींश्च स्पृष्ट्वा सशिरस्कोऽभ्युपेयादप इत्यप इति ॥ ३८ ॥

इति वासिष्ठधर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

अस्वतन्त्रा स्त्री पुरुषप्रधाना ॥ १ ॥
अनग्निकानुदक्या वामृतमिति विज्ञायते ॥ २ ॥
अथाप्युदाहरन्ति ।
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रश्च स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति ॥ ३ ॥
तस्या भर्तुरभिचार उक्तं प्रायश्चित्तं रहस्येषु ॥ ४ ॥
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ५ ॥
त्रिरात्रं रजस्वलाशुचिर्भवति ॥ ६ ॥

---

32. अन्तर्दशाहे परशवे नियोगाद्यस्तु भुक्तवान् F. तां विष्ठामुपजीवति. F. 38. पूय instead of यूप B. Ban. ed. सुतका H. अशुचीनुपस्पृश्य सशिरा अभ्युपेयादपः F.

V. 2. अभृतं E. H. अनृतं F. अभृतिं Bh. 3. अत्र° F. अथाभ्युदा° H. पुत्राश्च F. H. 4. मातुः° F. नंर्तुरतीचारा Bh. E. H.

सा नाश्नुयान्नाभ्यञ्ज्यान्नाप्सु स्नायादधः शयीत न दिवा स्वप्यान्नाग्निं स्पृशेन्न रज्जुं सृजेन्न दन्तान्धावयेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत न हसेन्न किंचितदाचरेन्न धावेतदखर्वेण पात्रेण पिबेदञ्जलिना वा पिबेल्लोहितायसेन वा ॥ ७ ॥

विज्ञायते हि । इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोहमित्येवमात्मानममन्यत । तं सर्वाणि भूतान्यभ्यक्रोशन्भ्रूणहन्भ्रूणहन्निति । स स्त्रिय उपाधावदस्यै मे भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीतेति । ता अब्रवन्किं नो भूयादिति । सोऽब्रवीद्वरं वृणीध्वमिति । ता अब्रुवन्नृतौ प्रजां विन्दामह इति कामसा विजनितोः संभवामेति । तथेति ताः प्रतिजगृहुः सैषा भ्रूणहत्या मासि मास्याविर्भवति तस्माद्रजस्वलाया अन्नं नाश्नीयाद्भ्रूणहत्याया एवैषा रूपं प्रतिमुच्यास्ते ॥ ८ ॥

तदाहुः । अञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यं तद्धि स्त्रिया अन्नमिति । तस्मात्तस्यै च तत्र च बीभत्सन्ते मेयमुपागादिति ॥ ९ ॥

उदक्यास्त्वासते येषां ये च केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिण इति ॥
सर्वे ते शूद्रधर्मिण इति ॥ १० ॥

इति वासिष्ठधर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

7. जगन्नाभ्यन्यान्तासु स्नायादधः Bh. E. H. ग्रहारिन्नीक्षेत B. H. °निरीक्षेन्न F. H. मृन्मयपात्रेण marginal gloss in B. दक्षिणपाणिना instead of अञ्जलिना marginal gloss in B. 8. ब्रह्महत्यायै F. भ्रूणहत्यायं Bh. E. H भागं wanted in B. H. गृह्णीतेति E. नोभूयादिति F. H. विजनतोः संभवामीति F. H. प्रतिगृह्णुस्तृतीयं भ्रूणहत्यायाः सैषा F. मासि मासिऋतुर्वा भवति B. Ban. ed. 9. तस्मात्तस्मै च B. Ban. ed. Bh. E. F. H. तत्र न F. H. मेधमुपागात Bh. F. H. मेध उपागात E. सेयमुतागात B. Ban. ed.

आचारः परमो धर्मः सर्वेषामिति निश्चयः ।
हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति ॥ १ ॥
नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणाः ।
हीनाचारमितो भ्रष्टं तारयन्ति कथंचन ॥२॥

आचारहीनं न पुनन्ति वेदा
  यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति
  नीडं शकुन्ता इव जातपक्षाः ॥ ३ ॥

आचारहीनस्य तु ब्राह्मणस्य
  वेदाः षडङ्गास्त्वखिलाः सयज्ञाः ।
कां प्रीतिमुत्पादयितुं समर्था
  अन्धस्य दारा इव दर्शनीयाः ॥ ४ ॥

नैनं छन्दांसि वृजिनात्तारयन्ति
  मायाविनं मायया वर्तमानम् ।
द्वेप्यक्षरे सम्यगधीयमाने
  पुनाति तद्ब्रह्म यथा इषेब्दाः ॥ ५ ॥

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोल्पायुरेव च ॥ ६ ॥ (मनु० ४।१५७)
आचारात्फलते धर्म आचारात्फलते धनम् ।
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ ७ ॥
सर्वलक्षणहीनोपि यः सदाचारवान्नरः ।
श्रद्दधानोनसूयश्च शतं वर्षाणि जीवति ॥ ८ ॥ (मनु० ४।१५८)

---

VI. 1. प्रथमो धर्मः E. F. अनाचार° F. हीनाचारः परीतात्मा B. Ban. ed. Bh. E. 3. जातवृक्षाः H. 4. षडङ्गाः साखिलाः B. Ban. ed. H. °उन्मादयितुं H. 8. अपि समुदाचारवांन्नरः F. H.

°दक्षिणादाच इति अनुम्बन्तादाच प्रस्तातेरर्थे।





आहारनिर्हारविहारयोगाः
सुसंवृता धर्मविदा तु कार्याः ।
वाग्बुद्धिकार्याणि तपस्तथैव
धनायुषी गुप्ततमे तु कार्ये ॥ ९ ॥

उभे मूत्रपुरीषे दिवा कुर्यादुदङ्मुखः ।
रात्रौ तु दक्षिणा कुर्यादेवं ह्यायुर्न रिष्यति ॥ १० ॥

प्रत्यग्निं प्रति सूर्यं च प्रति गां प्रति ब्राह्मणम् ।
प्रति सोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः ॥ ११ ॥

न नद्यां मेहनं कुर्यान्न पथि न च भस्मनि ।
न गोमये न कृष्टे नोप्ते न शाद्वलोपजीव्यच्छायासु ॥ १२ ॥

छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥ १३ ॥

उद्धृताभिरद्भिः कार्यं कुर्यात् ॥ १४ ॥

स्नानमनुद्धृताभिरपि ॥ १५ ॥

आहरेन्मृत्तिकां विप्रः कूलात्ससिकता तु या ॥ १६ ॥

अन्तर्जले देवगृहे वल्मीके मूषकस्थले ।
कृतशौचावशिष्टा वा न ग्राह्याः पञ्च मृत्तिकाः ॥ १७ ॥

एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् ।
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ॥ १८ ॥

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं वानप्रस्थानां यतीनां तच्चतुर्गुणमिति ॥ १९ ॥

---

9. °बुद्धिवीर्याणि F. H. 10. तु दिवा B. H. न रिष्यते F. न हिष्यति B. Ban. ed. 11. प्रति च द्विजं F. 12. नवाकृष्टे नोप्ते न शाड्वलोपजीव्यच्छायासु Bh. E. F. 17. च instead of वा F. H. 18. उभाभ्यां द्वेतु मृत्तिके F. 19. चतुर्गुणं B. Ban. ed. H.

अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोडश ।
द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥ २९ ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥ २१ ॥
व्रतेषु नियमेषु चेज्याध्ययनधर्मेषु ॥ २२ ॥
योगस्तपो दमो दानं सत्यं शौचं श्रुतं घृणा ।
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ २३ ॥
दीर्घवैरमसूया चासत्यं ब्राह्मणदूषणम् ।
पैशुन्यं निर्दयत्वं च जानीयाच्छूद्रलक्षणम् ॥ २४ ॥
ये शान्तदान्ताः श्रुतिपूर्णकर्णाः
जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्ता-
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २५ ॥
किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥ २६ ॥
शूद्रान्नेनोदरस्थेन यदि कश्चिन्मृतो द्विजः ।
स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले ॥ २७ ॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोपि नित्यशः ।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति ॥ २८ ॥
शूद्रान्नेन तु भुक्तेन मैथुनं योधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गारुहो भवेत् ॥ २९ ॥

---

20. द्वाविंशत् H. 21. °अनड्वहान्° H. 23. दया instead of दमः F. H. After this Sūtra F. only reads: नास्तिकःपिशुनश्चैव कृतघ्नो दीर्घरोषकः । चत्वारः कर्मचाण्डाला जन्मतश्चापि पञ्चमः ॥ 25. येषां च दान्ताः श्रुत° F. H. °गृहस्थास्ते F. H. 27. च यः instead of यदि F. कश्चिन्म्रियते F. 28. यजन्वापि F. जुहुयाद्वा जपन्वापि H.

स्वाध्यायोत्थं योनिमन्तं प्रशान्तं
वैतानस्थं पापभीरुं बहुज्ञम् ।
स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं
व्रतैः क्लान्तं तादृशं पात्रमाहुः ॥ ३० ॥

आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु ।
विनश्येत्पात्रदौर्बल्यान्न च पात्रं रसाश्च ते ॥ ३१ ॥

एवं गा वा हिरण्यं वा वस्त्रमश्वं महीं तिलान् ।
अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥ ३२ ॥

नाङ्गनखवादनं कुर्यात् ॥ ३३ ॥

नखैश्च भोजनादौ ॥ ३४ ॥

न चापोऽञ्जलिना पिबेत् ॥ ३५ ॥

न पादेन पाणिना वा जलमभिहन्यात् ॥ ३६ ॥

न जलेन जलम् ॥ ३७ ॥

नेष्टकाभिः फलं शातयीत ॥ ३८ ॥

न फलेन फलम् ॥ ३९ ॥

न कल्को न कुहको भवेत् ॥ ४० ॥

न म्लेच्छभाषां शिक्षेत ॥ ४१ ॥

अथाप्युदाहरन्ति ।

न पाणिपादचपलो न नेत्रचपलो भवेत् ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ ४२ ॥

---

30. स्वाध्यायार्थं Bh. E. H. कान्तं instead of क्षान्तं F. H. 31. दौर्ब-ल्यात्तच्च F. तव पात्रं Bh. नश्येत्पात्रदौर्बल्यात्क्षतपात्रं E. H. 32. एवं गावो B Ban. ed. H. दारुवत् instead of काष्ठवत् F. 33. नाङ्गानां छेदनं. F. नाङ्गरखवादनं Bh. 38. फलानि B. Ban. ed. H. फलानि पातयेत् F.

पारम्पर्या-

पारंपर्यगतो येषां वेदः सपरिवृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ४३ ॥
यं न सन्तं न वासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥
स ब्राह्मण इति ॥ ४४ ॥

इति वासिष्ठधर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

चत्वार आश्रमाः ॥ १ ॥
ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः ॥ २ ॥
तेषां वेदमधीत्य वेदौ वेदान्वाविशीर्णब्रह्मचर्यो यमिच्छेत्तमा-
वसेत् ॥ ३ ॥
ब्रह्मचार्याचार्यं परिचरेदा शरीरविमोक्षणात् ॥ ४ ॥
आचार्ये च प्रेतेऽग्निं परिचरेत् ॥ ५ ॥
विज्ञायते ह्यग्निराचार्यस्तवेति ॥ ६ ॥
संयतवाक् ॥ ७ ॥
चतुर्थषष्ठाष्टमकालभोजी ॥ ८ ॥
भैक्षमाचरेत् ॥ ९ ॥
गुर्वधीनः ॥ १० ॥
जटिलः शिखाजटो वा ॥ ११ ॥
गुरुं गच्छन्तमनुगच्छेदासीनश्चेत्तिष्ठेच्छयानश्चेदासीन उपासीत १२
आहूताध्यायी ॥ १३ ॥
सर्वं लब्धं निवेद्य तदनुज्ञया भुञ्जीत ॥ १४ ॥

---

43 °प्रत्यदहेतवः H.

VII. 5. सूते Bh. E. 6. हि तवाग्निरत्चार्य इति F. 8. भोक्षं H. 12. अनुगच्छन्नासीनं Bh. E.

खट्वाशयनदन्तधावनप्रक्षालनाञ्जनाभ्यञ्जनोपानच्छत्रवर्जी ॥ १५ ॥

तिष्ठेदहनि रात्रावासीत ॥ १६ ॥

त्रिरह्नोऽभ्युपेयादप इत्यप इति ॥ १७ ॥

इति वासिष्ठधर्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वासमानार्षेयामस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देत ॥ १ ॥

पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः ॥ २ ॥

वैवाह्यमग्निमिन्धीत ॥ ३ ॥

सायमागतमतिथिं नापरुन्ध्यात् ॥ ४ ॥

नास्यानश्नन्गृहे वसेत् ॥ ५ ॥

यस्य नाश्नाति वासार्थी ब्राह्मणो गृहमागतः ।
सुकृतं तस्य यत्किंचित्सर्वमादाय गच्छति ॥ ६ ॥

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ ७ ॥

नैकग्रामीण अतिथिर्विप्रः साङ्गतिकस्तथा ।
काले प्राप्ते अकाले वा नास्यानश्नन्गृहे वसेत् ॥ ८ ॥

श्रद्धाशीलोऽस्पृहयालुरलमग्न्याधेयाय नानाहिताग्निः स्यात् ॥ ९ ॥

अलं च सोमाय नासोमयाजी ॥ १० ॥

युक्तः स्वाध्याये यज्ञे प्रजनने च ॥ ११ ॥

गृहेष्वभ्यागतं प्रत्युत्थानासनवाक्सूनृतानसूयाभिर्महयेत् ॥ १२ ॥

---

VIII. 3. इन्धीन्वत Bh. E. H. 4. °अवरुन्ध्यात् F. 6. गच्छतीति Bh. E. H. 8. नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा F. H. प्राप्ते जले वा E. 10. सोमपानात्सोमयाजी F. 12. प्रत्युत्थानाशनशयनवाक् F. H.

यथाशक्ति चान्नेन सर्वाणि भूतानि ॥ १३ ॥
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
चतुर्णामाश्रमाणां तु गृहस्थश्च विशिष्यते ॥ १४ ॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ १५ ॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥ १६ ॥

नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतौ च गच्छन्विधिवच्च जुह्वन्
न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥

ब्रह्मलोकादिति ॥ १७ ॥

इति वासिष्ठधर्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

वानप्रस्थो जटिलश्चीराजिनवासी ॥ १ ॥
ग्रामं च न प्रविशेत् ॥ २ ॥
न फालकृष्टमधितिष्ठेत् ॥ ३ ॥
अकृष्टं मूलफलं सञ्चिन्वीत ॥ ४ ॥
उर्ध्वरेताः ॥ ५ ॥
क्षमाशयः ॥ ६ ॥
मूलफलभैक्षेणाश्रमागतमतिथिमभ्यर्चयेत् ॥ ७ ॥

---

13. सवर्भूतानि B. H. 14. च instead of तु F. H. गृहस्थस्तु F. H IX. 1. वानप्रस्थः प्रव्राजिनो जटि° H. 3. °अभितिष्ठेत् H. 6. क्षामाशयः F 7. °भक्षेण° H.

दद्यादेव न प्रतिगृह्णीयात् ॥ ८ ॥
त्रिषवणमुदकोपस्पर्शी ॥ ९ ॥
श्रामणकेनाग्निमाधायाहिताग्निः स्यात् ॥ १० ॥
वृक्षमूलनिकेतन ऊर्ध्वं षड्भ्यो मासेभ्योनग्निरनिकेतः ॥ ११ ॥
दद्याद्देवपितृमनुष्येभ्यः स गच्छेत्स्वर्गमानन्त्यमित्यानन्त्यम् ॥१२॥

इति वासिष्ठधर्मशास्त्रे नवमोध्यायः ॥ ९ ॥

---

परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत ॥ १ ॥
अथाप्युदाहरन्ति ।
अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
तस्यापि सर्वभूतेभ्यो न भयं जातु विद्यते ॥ २ ॥
अभयं सर्वभूतेभ्योदत्त्वा यस्तु निवर्त्तते ।
हन्ति जातानजातांश्च द्रव्याणि प्रतिगृह्य च ॥ ३ ॥
सन्न्यसेत्सर्वकर्माणि वेदमेकं न सन्न्यसेत् ।
वेदसन्न्यसनाच्छूद्रस्तस्माद्वेदं न सन्न्यसेत् ॥ ४ ॥
एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः ।
उपवासात्परं भैक्षं दया दानाद्विशिष्यत इति ॥ ५ ॥
मुण्डोममोपरिग्रहः ॥ ६ ॥
सप्तागाराण्यसङ्कल्पितानि चरेद्भिक्षाम् ॥ ७ ॥
विधूमे सन्नमुसले ॥ ८ ॥
एकशाटीपरिहितः ॥ ९ ॥

---

8. द्रव्यादेव ते प्रति° H. 9. उदकमास्पृशेत् F. 10. श्रावणकेन B. Ban. ed. F. 11. आवर्णकेण E. Bh. 11. वृक्षमूलिकः B. F. H.

X. 1. °पक्षिणां H. 4. सन्त्यजेत् instead of सन्न्यसेत् B. Ban. ed. H. 5. °यामः F. H. मतः instead of तपः E. 6. अमयो° H. 7. भैक्षं F. H. सप्तगौराणि H. 9. °परिवृतः F.

अजिनेन वा गोप्रलूनैस्तृणैरवस्तृतशरीरः ॥ १० ॥
स्थण्डिलशायी ॥ ११ ॥
अनित्यां वसतिं वसेत् ॥ १२ ॥
ग्रामान्ते देवगृहे शून्यागारे वा वृक्षमूले वा ॥ १३ ॥
मनसा ज्ञानमधीयानः ॥ १४ ॥
अरण्यनित्यः ॥ १५ ॥
न ग्राम्यपशूनां सन्दर्शने विचरेत् ॥ १६ ॥

अरण्यनित्यस्य जितेन्द्रियस्य
सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य
ध्रुवा ह्यनावृत्तिरुपेक्षकस्येति ॥ १७ ॥

अव्यक्तलिङ्गोऽव्यक्ताचारः ॥ १८ ॥
अनुन्मत्त उन्मत्तवेषः ॥ १९ ॥
अथाप्युदाहरन्ति ।

न शब्दशास्त्राभिरतस्य मोक्षो
न चापि लोकग्रहणे रतस्य ।
न भोजनाच्छादनतत्परस्य
न चापि रम्यावसथप्रियस्य ॥ २० ॥

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ २१ ॥
अलाभे न विषादी स्याल्लाभे नैव च हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विवर्जितः ॥ २२ ॥

---

10. गोत्रलूनैः Bh. E H. 17. अथाप्युदाहरन्ति B. F. H. ध्रुवः instead of ध्रुवाः E. 19. अनुन्मत्तवेषेण: H. 22. °विनिर्गतः B. F.

न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे ।
नागारे नासने नान्ने यस्य वै मोक्षवित्तु स इति ॥ २३ ॥

ब्राह्मणकुले यावल्लभेत तद्भुञ्जीत सायं प्रातर्मधुमांसवर्जम् ॥ २४ ॥

न च तृप्येत् ॥ २५ ॥

ग्रामे वा वसेत् ॥ २६ ॥

अजिह्मोशठोशरणोवसङ्कुसुकः ॥ २७ ॥

न चेन्द्रियसंसर्गं कुर्वीत केनचित् ॥ २८ ॥

उपेक्षकः सर्वभूतानां हिंसानुग्रहपरिहारेण ॥ २९ ॥

पैशुन्यमत्सराभिमानाहङ्काराश्रद्धानार्जवात्मस्तवपरगर्हादम्भलोभ-मोहक्रोधासूयाविवर्जनं सर्वाश्रमाणां धर्म इष्टः ॥ ३० ॥

यज्ञोपवीत्युदकमण्डलुहस्तः शुचिर्ब्राह्मणो वृषलान्नवर्जी न हीयते ब्रह्मलोकाद्ब्रह्मलोकादिति ॥ ३१ ॥

इति वासिष्ठधर्मशास्त्रे दशमोध्यायः ॥ १० ॥

---

षडर्घार्हा भवन्ति ॥ १ ॥

ऋत्विग्विवाह्यो राजापितृव्यस्नातकमातुलाश्च ॥ २ ॥

वैश्वदेवस्य सिद्धस्य सायं प्रातर्गृह्याग्नौ जुहुयात् ॥ ३ ॥

गृहदेवताभ्यो बलिं हरेत् ॥ ४ ॥

श्रोत्रियायाग्रभागं दत्त्वा ब्रह्मचारिणे वानन्तरं पितृभ्यो दद्यात् ॥ ५ ॥

ततोतिथिं भोजयेच्छ्रेयांसं श्रेयांसमानुपूर्व्येण ॥ ६ ॥

---

23. कुड्न्यां F. H. 24. After this Sūtra F. only reads : यतीन्साधून्वा गृहस्थः तृप्येत् । 27. °अशवः instead of °अशठः Bh. E. अवसङ्कुसुकः B. Ban. ed. E. 30. स्तेयं instead of असूया H.

XI. 1. षडर्घ्याः Bh. E. H. 2. वैवाह्यः H. 5. श्रोत्रियायान्नं दत्त्वा H.

स्वगृह्याणां कुमारीबालवृद्धतरुणप्रजाताः ॥ ७ ॥

ततोपरान्गृह्यान् ॥ ८ ॥

श्वचाण्डालपतितवायसेभ्यो भूमौ निर्वपेत् ॥ ९ ॥

शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात् ॥ १० ॥

शेषं दम्पती भुञ्जीयाताम् ॥ ११ ॥

सर्वोपयोगेन पुनःपाको यदि निरुप्ते वैश्वदेवेतिथिरागच्छेद्वि-शेषेणास्मा अन्नं कारयेत् ॥ १२ ॥

विज्ञायते हि । वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहं तस्मादप आनयन्त्यन्नं वर्षाभ्यस्तां हि शान्तिं जना विदुरिति ॥ १३ ॥

तं भोजयित्वोपासीत ॥ १४ ॥

आसीमान्तमनुव्रजेदनुज्ञानाद्वा ॥ १५ ॥

अपरपक्ष ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात् ॥ १६ ॥

पूर्वेद्युर्ब्राह्मणान्सन्निपात्य यतीन्गृहस्थान्साधून्वापरिणतवयसो विकर्मस्थाञ्श्रोत्रियानशिष्याननन्तेवासिनः ॥ १७ ॥

शिष्यानपि गुणवतो भोजयेत् ॥ १८ ॥

नग्नशुक्लक्लीबान्धश्यावदन्तकुष्ठिकुनखिवर्जम् ॥ १९ ॥

अथाप्युदाहरन्ति ।

अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।

अदुष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥ २० ॥

---

7. We follow Govindasvāmin's reading on Baudhāyana II. 7, 13, 5, whilst B. Bh. E. F. H. read प्रदाता: Ban. ed. प्रदाता, Calc, ed. प्रभृतीन्. see Bühler, Transl. 50, 356. 12. पुन: पाके Ban. ed निरुक्ते Bh. E.H. विशेषणास्मा E. K. 15 सीमान्तादनु° H. 19. विर्नग्न° B. F. H. विलग्न° marginal gloss in B. °शुक्लविग्धिश्याव H.

श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् ।
श्च्योतन्ते हि सुधाधारास्ताः पिबन्त्यकृतोदकाः ॥ २१ ॥
उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।
क्षीरधारास्ततो यान्त्यक्षय्याः सन्वरभागिनः ॥ २२ ॥
प्राक्संस्कारात्प्रमीतानां स्ववंश्यानामिति स्थितिः ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥ २३ ॥
उच्छेषणं भूमिगतं विकिरं लेपनोदकम् ।
अन्नं प्रेतेषु विसृजेदप्रजानामनायुषाम् ॥ २४ ॥
उभयोर्हस्तयोर्मुक्तं पितृभ्योन्नं निवेदितम् ।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ॥ २५ ॥
तस्मादशून्यहस्तेन कुर्यादन्नमुपागतम् ।
भोजनं वा समालभ्य तिष्ठेतोच्छेषणे उभे ॥ २६ ॥
द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा । —(मनौ ३।१२५॥)
भोजयेत्सुसमृद्धोपि न प्रसज्जेत विस्तरे ॥ २७ ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् । (मनौ ३।१२६॥)
पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ २८ ॥
अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलोपसंपन्नं सर्वालक्षणवर्जितम् ॥ २९ ॥
यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥ ३० ॥

---

21. श्च्योतन्ते वै. B. Ban. ed. श्च्योतन्ति हिंस्रधारास्ताः F. 22 पङ्क्तिभागिन. F.23. संप्रवेशनामिति श्रुतिः Bh. E. F. H. लेपमोदकं. B.Ban. ed. H. अनुप्रेतेषु B. Ban. ed. H. 25. उभयोः शाखयोः B. पार्श्वयोः F. H. 26. कुर्याद्दर्भमुप° F. 27. देवे read all Mss with exception of. F. K. प्रसज्येत B. Ban. ed. F. H.

देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् ।
प्रास्येदग्नौ तदन्नं वा दद्याद्वा ब्रह्मचारिणे ॥ ३१ ॥
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ।
तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ ३२ ॥
हविर्गुणा न वक्तव्याः पितरो यावदतर्पिताः ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥ ३३ ॥
नियुक्तस्तु यतिः श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥ ३४ ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥ ३५ ॥
दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ ३६ ॥
श्राद्धं दत्त्वा भुक्त्वा च मैथुनं योऽधिगच्छति ।
भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥ ३७ ॥
यस्ततो जायते गर्भो दत्त्वा भुक्त्वा च पैतृकम् ।
न स विद्यां समाप्नोति क्षीणायुश्चैव जायते ॥ ३८ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥ ३९ ॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥ ४० ॥
सन्तानवर्द्धनं पुत्रमुद्यतं पितृकर्मणि ।
देवब्राह्मणसंपन्नमभिनन्दन्ति पूर्वजाः ॥ ४१ ॥

---

31. तदन्नं तु B. H. 33. अर्पिताः B. H. F. 36. नाम instead of ज्ञेय Bh. E. H. 38. विद्यामवाप्नोति F. H. 41. पुत्र नुयन्तं B. Ban. ed. H सुयन्तं F. पुत्रतृपन्तः Bh. E. तृप्यन्त Calc. ed.

नन्दन्ति पितरस्तस्य सुकृष्टैरिव कर्षकाः ।
यद्वयास्थो ददात्यन्नं पितरस्तेन पुत्रिण इति ॥ ४२ ॥
श्रावण्याग्रहायिण्योश्चान्वष्टक्यां च पितृभ्यो दद्यात् ॥ ४३ ॥
द्रव्यदेशब्राह्मणसान्निधाने वाकालनियमः ॥ ४४ ॥
अवश्यं ब्राह्मणोग्नीनादधीत ॥ ४५ ॥
दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजेत ॥ ४६ ॥
नैयमिकं ह्येतद्दणसंस्तुतं च ॥ ४७ ॥
विज्ञायते हि । त्रिभिर्ऋणैर्ऋणवान्ब्राह्मणो जायत इति । यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इत्येष वानृणो यज्वा यः पुत्री ब्रह्मचर्यवानिति ॥ ४८ ॥
गर्भाष्टमेषु ब्राह्मणमुपनयीत ॥ ४९ ॥
गर्भादेकादशेषु राजन्यम् ॥ ५० ॥
गर्भाद्वादशेषु वैश्यम् ॥ ५१ ॥
पालाशो वा दण्डो ब्राह्मणस्य ॥ ५२ ॥
नैय्यग्रोधः क्षत्रियस्य वा ॥ ५३ ॥
औदुम्बरो वा वैश्यस्य ॥ ५४ ॥
केशसंमितो ब्राह्मणस्य ॥ ५५ ॥
ललाटसंमितः क्षत्रियस्य ॥ ५६ ॥
घ्राणसंमितो वैश्यस्य ॥ ५७ ॥
मौञ्जी रशना ब्राह्मणस्य ॥ ५८ ॥
धनुर्ज्या क्षत्रियस्य ॥ ५९ ॥
शणतान्तवी वैश्यस्य ॥ ६० ॥

---

42. तन्वन्ति B. Bh. 45. अवश्यं च B. H. 47. ऋणं संस्तृतं Bh. F. H. संस्कृतं B. Ban. ed. 48. येन instead of यज्ञेन H. 52. पालाशो वैल्वो वा F. H. 55-60 wanted in F. H. 57. घ्राण° Aśvalāyanagṛihyas. 1,19,13.

कृष्णाजिनमुत्तरीयं ब्राह्मणस्य ॥ ६१ ॥
रौरवं क्षत्रियस्य ॥ ६२ ॥
गव्यं वस्ताजिनं वा वैश्यस्य ॥ ६३ ॥
शुक्लमहतं वासो ब्राह्मणस्य ॥ ६४ ॥
माञ्जिष्ठं क्षत्रियस्य ॥ ६५ ॥
हारिद्रं कौशेयं वा वैश्यस्य ॥ ६६ ॥
सर्वेषां वा तान्तवमरक्तम् ॥ ६७ ॥
भवत्पूर्वां ब्राह्मणो भिक्षां याचेत् ॥ ६८ ॥
भवन्मध्यां राजन्यः ॥६९ ॥
भवदन्त्यां वैश्यः ॥ ७० ॥
आ षोडशाद्ब्राह्मणस्य नातीतः कालः ॥ ७१ ॥
आ द्वाविंशात्क्षत्रियस्य ॥ ७२ ॥
आ चतुर्विंशाद्वैश्यस्य ॥ ७३ ॥
अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ७४ ॥
नैतानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः ॥ ७५ ॥
पतितसावित्रीक उद्दालकव्रतं चरेत् ॥ ७६ ॥
द्वौ मासौ यावकेन वर्तयेन्मासं पयसार्धमासमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोहोरात्रमुपवसेत् ॥ ७७ ॥
अश्वमेधावभृथं गच्छेत् ॥ ७८ ॥
व्रात्यस्तोमेन वा यजेद्वा यजेद्वेति ॥ ७९ ॥

इति वासिष्ठधर्मशास्त्र एकादशोध्यायः ॥ ११ ॥

---

63. वस्त्राजिनं F. H. 68. भिक्षयीत H. 77. त्रिरात्रमम्बुभ° F. H. 79. यजेदिति read all Mss except K.

अथातः स्नातकव्रतानि ॥ १ ॥

स न कंचिद्याचेतान्यत्र राजान्तेवासिभ्यः ॥ २ ॥

क्षुधापरीतस्तु किंचिदेव याचेत कृतमकृतं वा क्षेत्रं गामजाविक-
मन्ततो हिरण्यं धान्यमन्नं वा ॥ ३ ॥

न तु स्नातकः क्षुधावसीदेदित्युपदेशः ॥ ४ ॥

न मलिनवाससा सह संवसेत ॥ ५ ॥

न रजस्वलया ॥ ६ ॥

नायोग्यया ॥ ७ ॥

न कुलंकुलः स्यात् ॥ ८ ॥

वत्सतन्त्रीं विततां नातिक्रामेत् ॥ ९ ॥

नोद्यन्तमादित्यं पश्येन्नास्तं यन्तम् ॥ १० ॥

नाप्सु मूत्रपुरीषे कुर्यात् ॥ ११ ॥

न निष्ठीवेत् ॥ १२ ॥

परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यादु
दङ्मुखश्चाहनि नक्तं दक्षिणामुखः सन्ध्यामासीतोत्तरम् ॥ १३ ॥

अथाप्युदाहरन्ति

स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम्
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥ १४ ॥

अप्सु पाणौ च काष्ठे च कथितं पावके शुचिः
तस्मादुदकपाणिभ्यां परिमृज्यात्कमण्डलुम् ॥ १५ ॥

पर्यग्निकरणं ह्येतन्मनुराह प्रजापतिः ॥ १६ ॥

कृत्वा चावश्यकर्माणि आचामेच्छौचवित्तम इति ॥ १७ ॥

---

XII. 6. Thus all MSS., but this Sūtra has to be read नारज-स्वलया. 10. पश्येन्नादित्य यन्तं H. 13. °उत्तरा Bh. E. F. H. 17. चावे-श्यकार्याणि Bh. E. F. H. °वित्तत इति B. Bh. E. F. H.

प्राङ्मुखोन्नानि भुञ्जीत ॥ १८ ॥

तूष्णीं साङ्गुष्ठं कृत्स्नग्रासं ग्रसेत ॥ १९ ॥

न च शब्दं कुर्यात् ॥ २० ॥

ऋतुकालगामी स्यात्पर्ववर्जं स्वदारेषु ॥ २१ ॥

अतिर्यगुपेयात् ॥ २२ ॥

अथाप्युदाहरन्ति

यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम् ।

भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः

या स्यादनित्यचारेण रतिः साधर्मसंश्रिता ॥ २३ ॥

अपि च काठके विज्ञायते । अपि नः श्वो विजनिष्यमाणाः

पतिभिः सह शयीरान्निति स्त्रीणामिन्द्रदत्तो वर इति ॥ २४ ॥

न वृक्षमारोहेत् ॥ २५ ॥

न कूपमवरोहेत् ॥ २६ ॥

नाग्निं मुखेनोपधमेत् ॥ २७ ॥

नाग्निं ब्राह्मणं चान्तरेण व्यपेयात् २८ ॥

नाग्न्योः ॥ २९ ॥

न ब्राह्मणयोरननुज्ञाप्य वा ॥ ३० ॥

भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते ॥ ३१ ॥

नेन्द्रधनुर्नाम्ना निर्दिशेत् ॥ ३२ ॥

मणिधनुरिति ब्रूयात् ॥ ३३ ॥

---

20. मुखशब्दं B. F. H. 21. स्वादारेवं स्त्रियमुपेयात् F. स्वदारेवं तीर्थमुपेयत Bh. E. H. 24. अद्य श्वा वा विजनिष्यमानाभिः F. H. अपि च नश्वयो E. अविनस्यो Bh. इन्द्रदत्तात् E. 25. तावन्न वृ° F. H. 28. च्यवेत H.

पालाशमासनं पादुके दन्तधावनमिति वर्जयेत् ॥ ३४ ॥
नोत्सङ्गे भक्षयेत् ॥ ३५ ॥
नासन्द्यां भुञ्जीत ॥ ३६ ॥
वैणवं दण्डं धारयेत् ॥ ३७ ॥
रुक्मकुण्डले च ॥ ३८ ॥
न बहिर्मालां धारयेदन्यत्र रुक्ममय्या ॥ ३९ ॥ °मय्याः इतिस्यात्
सभाः समवायांश्च वर्जयेत् ॥ ४० ॥
अथाप्युदाहरन्ति
अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम्
अव्यवस्था च सर्वत्र एतन्नाशनमात्मन इति ॥ ४१ ॥
नावृतो यज्ञं गच्छेद्यदि व्रजेत्प्रदक्षिणं पुनराव्रजेत् ॥ ४२ ॥
अधिवृक्षसूर्यमध्वानं न प्रतिपद्येत ॥ ४३ ॥
नावं च सांशयिकीं नाधिरोहेत् ॥ ४४ ॥
बाहुभ्यां न नदीं तरेत् ॥ ४५ ॥
उत्थायापररात्रमधीत्य न पुनः प्रतिसंविशेत् ॥ ४६ ॥
प्राजापत्ये मुहूर्ते ब्राह्मणः कांश्चिन्नियमाननुतिष्ठेदनुतिष्ठेदिति॥४७॥

इति वासिष्ठधर्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

---

अथातः स्वाध्यायोपाकर्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा ॥ १ ॥
अग्निमुपसमाधायाक्षतधाना जुहोति ॥ २ ॥

---

36. आसन्द्यां न भुञ्जीत Bh. E. H. 39. माल्यं Bh. E. 40. सभाः समवायांश्च वक्षीयन्न F. H. जवीयन्न Bh. सभासमवायान्नावजयेत् B. सभासमेधाया। न्नावभवेत् E. नावजयेत K. 41. एवं नाशनं F. 45. wanted in Ban. ed.
XIII. 2. उपसमाधाय कृतधाना: H.

देवेभ्य ऋषिभ्यश्छन्दोभ्यश्चेति ॥ ३ ॥

ब्राह्मणान्स्वस्तिवाच्य दधि प्राश्य ततोऽध्यायानुपाकुर्वीरन् ॥ ४ ॥

अर्धपञ्चमान्मासानर्धषष्ठान्वा ॥ ५ ॥

अत ऊर्ध्वं शुक्लपक्षेष्वधीयीत ॥ ६ ॥

कामं तु वेदाङ्गानि ॥ ७ ॥

तस्यानध्यायाः ॥ ८ ॥

सन्ध्यास्तनिते ॥ ९ ॥

सन्ध्यासु ॥ १० ॥

अन्तःशवदिवाकीर्त्येषु नगरेषु ॥ ११ ॥

कामं गोमयपर्युषिते परिलिखिते वा ॥ १२ ॥

श्मशानान्ते ॥ १३ ॥

शयानस्य ॥ १४ ॥

श्राद्धिकस्य ॥ १५ ॥

मानवं चात्र श्लोकमुदाहरन्ति ।

फलान्यपस्तिलान्भक्षान्यच्चान्यच्छ्राद्धिकं भवेत् ।

प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृता इति ॥ १६ ॥

धावतः पूतिगन्धप्रभृतावीरिणे ॥ १७ ॥

वृक्षारूढस्य ॥ १८ ॥

नावि सेनायां च ॥ १९ ॥

भुक्त्वा चार्द्रपाणेः ॥ २० ॥

वाणशब्दे ॥ २१ ॥

चतुर्दश्याममावास्यायामष्टम्यामष्टकासु ॥ २२ ॥

---

4. अर्धपञ्चमासान् Bh. E. 16. फलान्यापः E. Bh. K. °यथान्यत्° B. H. 17. गन्धिप्रभृतीरिणे B. H. गन्धप्रभृतात्रेण E.

प्रसारितपादोपस्थकृतोपाश्रितस्य च ॥ २३ ॥
गुरुसमीपे ॥ २४ ॥
मैथुनव्यपेतायाम् ॥ २५ ॥
वाससा मैथुनव्यपेतेनानिर्णिक्तेन ॥ २६ ॥
ग्रामान्ते ॥ २७ ॥
छर्दितस्य ॥ २८ ॥
मूत्रितस्योच्चारितस्य ॥ २९ ॥
ऋग्यजुषां च सामशब्दे वा ॥ ३० ॥
अजीर्णे ॥ ३१ ॥
निर्घाते ॥ ३२ ॥
भूमिचलने ॥ ३३ ॥
चन्द्रसूर्योपरागे ॥ ३४ ॥
दिङ्नादपर्वतप्रपातेषूपलरुधिरपांसुवर्षेष्वाकालिकम् ॥ ३५ ॥
उल्काविद्युत्समासे त्रिरात्रम् ॥ ३६ ॥
उल्काविद्युत्सज्योतिषम् ॥ ३७ ॥
अपर्तावाकालिकम् ॥ ३८ ॥
आचार्ये प्रेते त्रिरात्रम् ॥ ३९ ॥
आचार्यपुत्रशिष्यभार्यास्वहोरात्रम् ॥ ४० ॥
ऋत्विक्श्वशुरपितृव्यमातुलाननवरवयसः प्रत्युत्थायाभिवदेत् ।४१।
ये चैव पादग्राह्यास्तेषां भार्या गुरोश्च ॥ ४२ ॥

---

34. °उपरागेषु H. 35. दिग्नाद° B. H. दिग्दाह° Ban. ed. 35. °पर्वता नादार्वाकम्पप्र° B. Bh. E. H. 39. आचार्ये च B. F. H. 40. After this Sūtra H. only reads: ऋत्विग्योनिसंबन्धेषु च गुरोः पादोपसंग्रहणं कार्यम् । 41 °वन्देत् Bh. E. H.

मातापितरौ च ॥ ४३ ॥
यो विद्यादभिवदितुमहमयं भो इति याद् ॥ ४४ ॥
यश्च न विद्यात् ॥ ४५ ॥
प्रत्यभिवादमामन्त्रिते स्वरोन्त्यः प्लवते सन्ध्यक्षरमप्रगृह्यमायाव्-भावं चापद्यते यथा भो भाविति ॥ ४६ ॥
पतितः पिता परित्याज्यो माता तु पुत्रे न पतति ॥ ४७ ॥
अथाप्युदाहरन्ति ।
उपाध्यायाद्दशाचार्या आचार्याणां शतं पिता ।
पितुर्दशशतं माता गौरवेणातिरिच्यते ॥ ४८ ॥
भार्या पुत्राश्च शिष्याश्च संसृष्टाः पापकर्मभिः ।
परिभाष्य परित्याज्याः पतितो योन्यथा त्यजेत् ॥ ४९ ॥
ऋत्विगाचार्यावयाजकानध्यापकौ हेयावन्यत्र हानात्पतति ॥५०॥
पतितेनोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः ॥ ५१ ॥
सा हि परगामिनी ॥ ५२ ॥
तामरिक्थामुपेयात् ॥ ५३ ॥
गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिरिष्यते ।
गुरुवद्गुरुपुत्रस्य वर्तितव्यमिति श्रुतिः ॥ ५४ ॥
शस्त्रं विषं सुरा चाप्रतिगृह्याणि ब्राह्मणस्य ॥ ५५ ॥
विद्यावित्तवयःसंबन्धाः कर्म च मान्यम् ॥ ५६ ॥
पूर्वः पूर्वो गरीयान् ॥ ५७ ॥
स्थविरबालातुरभारिकस्त्रीचक्रीवगतां पन्थाः समागमे परस्मै-परस्मै देयः ॥ ५८ ॥
राजस्नातकयोः समागमे राज्ञा स्नातकाय देयः ॥ ५९ ॥

---

47. Compare Apast. Dh. I, 28, 9; माता तु पुत्रं B. Bh. F. वा. ध. १.

सर्वैरेव वध्वा ऊह्यमानायै ॥ ६० ॥

तृणभूम्यग्न्युदकवाक्सूनृतानसूयाः सतां गृहे नोच्छिद्यन्ते कदा च न कदा च नेति ॥ ६१ ॥

इति वासिष्ठधर्मशास्त्रे त्रयोदशोऽध्यायः ॥१३ ॥

---

अथातो भोज्याभोज्यं च वर्णयिष्यामः ॥ १ ॥

चिकित्सकमृगयुपुंश्चलीदण्डिकस्तेनाभिशस्तपण्ढपातितानामन्नमभोज्यम् ॥ २॥

कदर्यदीक्षितबद्धातुरसोमविक्रायितक्षरजकशौण्डिकसूचकवार्धुषिकचर्मावकृन्तानाम् ॥ ३ ॥

शूद्रस्य च ॥ ४ ॥

अस्त्रभृतश्च ॥ ५ ॥

उपपतेर्यश्चोपपतिं मन्यते ॥ ६ ॥ अनुमन्यते इत्यर्थः।

यश्च गृहान्दहेत् ॥ ७ ॥

यश्च वधार्हान्नोपहन्यात् ॥ ८ ॥

को भोक्ष्यत इति वाचाभिघुष्टम् ॥ ९ ॥

गणान्नं गणिकान्नं चेति ॥ १० ॥

अथाप्युदाहरन्ति ।

नाश्नन्ति श्ववतो देवा नाश्नन्ति वृषलीपतेः ।
भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृह इति ॥ ११ ॥

---

XIV. 2. शठ° instead of °पण्ढ° B. Ban. ed. °खण्ड° H. 3. °बद्धासुरसोम° H. °विंक्रयितक्षक° Bh. E. H. विक्रयितस्कररजक° F. °सूंचिक° B. Ban. ed. E. F. H. 5. अस्त्रपुतस्य H. 6. °उपपत्तिं F. यश्चोपरि B. Ban. ed.

एधोदकयवसकुशलाजाभ्युद्यतयानावसथशफरीप्रियङ्गुस्रग्गन्धम-
धुमांसानीत्येतेषां प्रतिगृह्णीयात् ॥ १२ ॥
अथाप्युदाहरन्ति ।
गुर्वर्थं दारमुज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं तत इति ॥ १३ ॥
न मृगयोरिषुचारिणः परिवर्ज्यमन्नम् ॥ १४ ॥
विज्ञायते हि । अगस्त्यो वर्षसाहस्रिके सत्रे मृगयां चचार ।
तस्यासंस्तरसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानाम् ॥ १५ ॥
अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति ।
उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम् ।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः ॥ १६ ॥
श्रद्दधानस्य भोक्तव्यं चोरस्यापि विशेषतः ।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहून् ॥ १७ ॥
न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ १८ ॥
चिकित्सकस्य मृगयोः शल्यहर्तुस्तु पापिनः ।
षण्ढस्य कुलटायाश्च उद्यतापि न गृह्यत इति ॥ १९ ॥
उच्छिष्टमगुरोरभोज्यम् ॥ २० ॥
स्वमुच्छिष्टमुच्छिष्टोपहतं च ॥ २१ ॥
यद्वसनकेशकीटोपहतं च ॥ २२ ॥
कामं तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनावकीर्य वाचा प्रशस्त-
मुपयुञ्जीत ॥ २३ ॥

---

15. Ban. ed. F. H. connect विज्ञायते हि with the preceding Sūtra
19. पापिनः Bh. E. पाशिकः H. खण्डस्य E. H. 23. भक्ष्य F. H.

अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति ।
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ २४ ॥
देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् ॥ २५ ॥
तस्मादन्नमपोद्धृत्य शेषं संस्कारमर्हति ।
द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन तु ॥ २६ ॥
मार्जारमुखसंस्पृष्टं शुचि एव हि तद्भवेत् ॥ २७ ॥
अन्नं पर्युषितं भावदुष्टं सहृल्लेखं पुनःसिद्धमाममांसं पक्वं च ॥ २८ ॥
कामं तु दध्ना घृतेन वाभिघारितमुपयुञ्जीत ॥ २९ ॥
अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति ।
घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतम् ।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः ॥ ३० ॥
हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनानि च ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥ ३१ ॥
प्रदद्यान्न तु हस्तेन नायसेन कदा च नेति ॥ ३२ ॥
लशुनपलाण्डुक्याकुगृञ्जनश्लेष्मान्तकवृक्षनिर्यासलोहितव्रश्चनश्व—
काकावलीढशूद्रोच्छेषणभोजनेष्वतिकृच्छ्रः ॥ ३३ ॥
सन्धिनीक्षीरमवत्साक्षीरम् ॥ ३४ ॥
गोमहिष्यजानामनिर्दशाहानाम् ॥ ३५ ॥

---

27. जाङ्गलमुख' H. शुचिरेव thus all MSS. 28. सुकल्लेखं Bh. E. 31 उपतिष्ठन्ते H. भुङ्क्ते च F. H. 33. केचुकः instead of क्याकुः H. कपाल F क्यान्दु E. After this Sūtra F. and H. only read अन्यत्र मधुमांसफल-वि[illegible] कृच्छ्र इतरेषु ॥

अन्तर्नाव्युदकम् ॥ ३६ ॥

अपूपधानाकरम्भसक्तुवटकतैलपायसशाकानि शुक्तानि वर्जयेत् ॥ ३७ ॥

अन्यांश्च क्षीरयवपिष्टविकारान् ॥ ३८ ॥

श्वाविच्छल्यकशशकच्छपगोधाः पञ्चनखानां भक्ष्याः ॥ ३९ ॥

अनुष्ट्राः पशूनामन्यतोदन्ताश्च ॥ ४० ॥

मत्स्यानां वा चेटगवयशिशुमारनक्रकुलीराः ॥ ४१ ॥

विकृतरूपाः सर्पशीर्षाश्च ॥ ४२ ॥

गौरगवयशरभाश्च ॥ ४३ ॥

अनुद्दिष्टास्तथा ॥ ४४ ॥

धेन्वनडुहावपन्नदन्ताश्च ॥ ४५ ॥

भक्ष्यौ तु धेन्वनडुहौ मेध्यौ वाजसनेयके विज्ञायते ॥ ४६ ॥

खड्गे तु विवदन्त्यग्राम्यशूकरे च ॥ ४७ ॥

शकुनानां च विषुविष्करजालपादकलविङ्कप्लवहंसचक्रवाकभासवायसपारावतकुररसारङ्गपाण्डुकपोतक्रौञ्चक्रकरकङ्कगृध्रश्येनबकबलाकमद्गुटिट्टिभमान्धालनक्तञ्चरदार्वाघाटचटकैरैलातकाहारीतखञ्जरीटग्राम्यकुक्कुटशुकशारिककोकिलक्रव्यादो ग्रामचारिणश्च ग्रामचारिणश्चेति ॥ ४८ ॥

इति वासिष्ठधर्मशास्त्रे चतुर्दशोऽध्यायः ॥ १४ ॥

---

37. नाशुक्तानि H. नाशुष्कानि F. नाशुल्कानि B. Ban. ed. 39. °शल्क° F. H. 48. °कुक्कुट° B. E. F. °कुक्कुर° H. °माघार° B, Ban. ed. E. माधां नक्तं° Bh. F. H. °टिट्टिभान्धनक्तं° J. O. 913. क्रव्यात्तः H.

शोणितशुक्रसंभवः पुरुषो भवति मातापितृनिमित्तकः ॥ १ ॥

तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः ॥ २ ॥

न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ॥ ३ ॥

स हि सन्तानाय पूर्वेषाम् ॥ ४ ॥

न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः ॥ ५ ॥

पुत्रं प्रतिगृहीष्यन्बन्धूनाहूय राजनि च निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वादूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयात् ॥ ६ ॥

सन्देहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् ॥ ७ ॥

विज्ञायते ह्येकेन बहूंस्त्रायत इति ॥ ८ ॥

तस्मिंश्चेत्प्रतिगृहीत औरसः पुत्र उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः ॥ ९ ॥

यदि नाभ्युदयिकेषु युक्तः स्यात् ॥ १० ॥

वेदविप्लावकः शूद्रयाजक उत्तमवर्णवर्गपतितास्तेषां पात्रनिनयनम् ॥ ११ ॥

अपात्रसङ्करादकृत्स्नं पात्रमादाय दासोसवर्णापुत्रो वा बन्धुरसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान्दर्भाँल्लोहितान्वोपस्तीर्य पूर्णपात्रमस्मै निनयेत् ॥ १२ ॥

निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोन्वालभेरन् ॥ १३ ॥

अपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन् ॥ १४ ॥

अत ऊर्ध्वं न तं धर्मयेयुः ॥ १५ ॥

---

XV. 1. भवति wanted B. F. H. 3 त्वैवैकं B. न चैकं H. 5. न तु B.: 6. चावेद्य B. F. H. 10. उपयुक्तः Bh. 11. विप्लावाकिनः F. H. विप्लावहीनः 13. नेतारं F.

तद्धर्माणस्तं धर्मयन्तः ॥ १६ ॥
पतितानां तु चरितव्रतानां प्रत्युद्धारः ॥ १७ ॥
अथाप्युदाहरन्ति ।
अग्रेभ्युद्धरतां गच्छेत्क्रीडन्निव हसन्निव ।
पश्चात्पातयतां गच्छेच्छोचन्निव रुदन्निवेति ॥ १८ ॥
आचार्यमातृपितृहन्तारस्तत्प्रसादादपयाप्याद्वा एषा तेषां प्रत्यापत्तिः ॥ १९ ॥
पुण्यह्रदात्प्रसृताद्वा काञ्चनं पात्रं माहेयं वा पूरयित्वापोहिष्ठाभिरेनमद्भिरभिषिञ्चन्ति ॥ २० ॥
सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातो व्याख्यात इति ॥ २१ ॥

इति वासिष्ठधर्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

अथ व्यवहाराः ॥ १ ॥
राजा मन्त्री वा सदःकार्याणि कुर्यात् ॥ २ ॥
द्वयोर्विवदमानयोः पक्षान्तरं न गच्छेत् ॥ ३ ॥
यथासनमपराधोह्यन्तेनापराधः ॥ ४ ॥
समः सर्वेषु भूतेषु यथासनमपराधोह्याद्यवर्णयोर्विद्यान्ततः ॥ ५ ॥
संपन्नं च रक्षयेत् ॥ ६ ॥
राजबालधनानि ॥ ७ ॥
अप्राप्तव्यवहाराणाम् ॥ ८ ॥

---

16. ते न संधर्मयेयुः B. Bh. E. H. 19. एषां Bh. E. 20. पूर्णाह्रदात् thus all MSS. except B. which reads पूर्गाद्वा दशाद्ह्रदात्प्रवृत्ताद्वा.

XVI. 4. and 5. are evidently corrupt. 5. अद्यवर्णयोर्विधानतः J.O. 913. 6. सपन्नं च र° B. Ban. ed. संपन्नं च क्षरेत्तु H.

प्राप्तकाले तु तद्यत् ॥ ९ ॥

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
धनस्वीकरणं पूर्वं धनी धनमवाप्नुयादिति ॥ १० ॥

मार्गक्षेत्रेभ्यो विसर्गस्तथा परिवर्त्तनम् ॥ ११ ॥

तरुणगृहेष्वर्थान्तरेषु त्रिपादमात्रम् ॥ १२ ॥

गृहक्षेत्रविरोधे सामन्तप्रत्ययः ॥ १३ ॥

सामन्तविरोधे लेख्यप्रत्ययः ॥ १४ ॥

प्रत्यभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणीप्रत्ययः ॥ १५ ॥

अथाप्युदाहरन्ति ।

पैतृकं क्रीतमाधेयमन्वाधेयं प्रतिग्रहम् ।
यज्ञादुपगमो वेणिस्तथा धूमशिखाष्टमीति ॥ १६ ॥

तत्र भुक्तानुभुक्तदशवर्षम् ॥ १७ ॥

अन्यथाप्युदाहरन्ति ।

आधिः सीमा बालधनो निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रियद्रव्यं न संभोगेन हीयते ॥ १८ ॥

प्रहीणद्रव्याणि राजगामीनि भवन्ति ॥ १९ ॥

ततोन्यथा राजा मन्त्रिभिः सह नागरैश्च कार्याणि कुर्यात् ॥ २० ॥

वेधसो वा राजा श्रेयान्गृध्रपरिवारं स्यात् ॥ २१ ॥

गृध्रपरिवारं वा राजा श्रेयान् ॥ २२ ॥

गृध्रपरिवारं स्यान्न गृध्रो गृध्रपरिवारं स्यात् ॥ २३ ॥

परिवाराद्धि दोषाः प्रादुर्भवन्ति ॥ २४ ॥

---

11. मार्गे क्षेत्रे एज्यो विसर्गे तथा Bh. E. H. मार्गक्षेत्रयोर्विसर्गं तथा पार्-वर्तने F. 12. त्रिपादपात्रं B. Ban. ed. 16. पत्त्रकं F. H. पैत्रकं B पत्त्रकां E. Bh. प्रतिग्रहः K. 18. बालधनं निक्षेपोनिधी Manu Dh. 8, 149. तथान्यथा B. Eh. 21-23. These three Sūtras are most probably corrupt ;read वैतसः instead of वैधसः of all Mss.; अगृध्रपरिवारः K. गृध्रपरिवारः K.

स्तेयहारविनाशनं च ॥ २५ ॥
तस्मात्पूर्वमेव परिवारं पृच्छेत् ॥ २६ ॥
अथ साक्षिणः ॥ २७ ॥
श्रोत्रियो रूपवाञ्शीलवान्पुण्यवान्सत्यवान्साक्षिणः ॥ २८ ॥
सर्वेषु सर्व एव वा ॥ २९ ॥
स्त्रीणां साक्षिणः स्त्रियः कुर्याद्द्विजानां सदृशा द्विजाः शूद्राणां सन्तः शूद्राश्चान्त्यानामन्त्ययोनयः ॥ ३० ॥
अथाप्युदाहरन्ति ।
प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् ।
दण्डशुल्कावशिष्टं च न पुत्रो दातुमर्हति ॥ ३१ ॥
ब्रूहि साक्षिन्यथातत्त्वं लम्बन्ते पितरस्तव ।
तव वाक्यमुदीक्षाणा उत्पतन्ति पतन्ति च ॥ ३२ ॥
नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ।
अन्धः शत्रुकुले गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ३३ ॥
पञ्च कन्यानृते हन्ति दश हन्तिगवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ३४ ॥
व्यवहारे मृते दारे प्रायश्चित्तं कुलस्त्रियाः ।
तेषां पूर्वपरिच्छेदाच्छिद्यन्तेत्रापवादिभिः ॥ ३५ ॥

उद्वाहकाले रतिसंप्रयोगे
प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेयुः
पञ्चानृतान्याहुरपातकानि ॥ ३६ ॥ *

---

26. पश्चात्पूर्वं B. F. H. 27. साक्षिकः F. H. 28. गुणवान् E. H. 30. स्त्रीणां तु F. H. 31. सैरिकं B. Ban. ed. 35. व्यवहेनृते पारे B. Ban. ed. द्वारे Bh. E. चापवादिभिः B. H.

वासिष्ठ धर्म ७.

भारते ऽयमर्थो नयानुपूर्व्योक्तः —
न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥

स्वजनस्वार्थे यदि वार्थहेतोः
पक्षाश्रयेणैव वदन्ति कार्यम् ।
ते शब्दवंशस्य कुलस्य पूर्वान्
स्वर्गस्थितांस्तानपि पातयन्ति ॥
अपि पातयन्तीति ॥ ३७ ॥
इति वासिष्ठधर्मशास्त्रे षोडशोध्यायः ॥ १६ ॥

---

ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥
अनन्ताः पुत्रिणां लोका नापुत्रस्य लोकोस्तीति श्रूयते ॥ २ ॥
अप्रजाः सन्त्वत्रिण इत्यभिशापः ॥ ३ ॥
प्रजाभिरग्ने अमृतत्वमश्यामित्यपि निगमो भवति ॥ ४ ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति ॥ ५ ॥
क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते ॥ ६ ॥
तत्रोभयथाप्युदाहरन्ति ॥ ७ ॥
यद्यन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्यन्दितमार्षभमिति ॥ ८ ॥ स्कन्दितमिति पाठः।
अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः
पुत्रो भवति संपराये मोघं तेत्ता कुरुते तन्तुमेतमिति ॥ ९ ॥

---

37. पक्षाश्रयेणाभिवदान्ति कार्याः B. Ban. ed. H. द्वे शब्द° B. Ban. ed. H. कुलस्य दग्ध्वा स्वर्ग° Ban. ed. दृष्ट्वा B. °स्थितानसमपि B. Ban. ed.

XVII. 8. यद्यन्यां गोषु B. Bh.. गोपानामेव E. 9. न जनयितुः B. Bh. E. H,, compare however Āpast Bh. II, 6. 13. 7. संपरायः B. Ban ed. H.

बहूनामेकजातानामेकश्चेत्पुत्रवान्नरः ।
सर्वे ते तेन पुत्रेण पुत्रवन्त इति श्रुतिः ॥ १९ ॥
बह्वीनामेकपत्नीनामेका पुत्रवती यदि ।
सर्वास्तास्तेन पुत्रेण पुत्रवन्त्य इति श्रुतिः ॥ ११ ॥
द्वादश इत्येव पुत्राः पुराणदृष्टाः ॥ १२ ॥
स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः ॥ १३ ॥
तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः ॥ १४ ॥
तृतीयः पुत्रिका ॥ १५ ॥
विज्ञायत अभ्रातृका पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वम् ॥ १६ ॥
तत्र श्लोकः ।
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥ १७ ॥
पौनर्भवश्चतुर्थः ॥ १८ ॥
या कौमारं भर्त्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति ॥ १९ ॥
या च क्लीबं पतितमुन्मत्तं वा भर्त्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति ॥ २० ॥
कानीनः पञ्चमः ॥ २१ ॥
यं पितृगृहेसंस्कृता कामादुत्पादयेन्मातामहस्य पुत्रो भवतीत्याहुः ॥ २२ ॥
अथाप्युदाहरन्ति ।
अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति ॥ २३ ॥

19. पुनर्भूर्या B. F. H. 20. या वा B. F. H. 22. या E. H.

गृहे च गूढोत्पन्नः षष्ठः ॥ २४ ॥

इत्येते दायादा बान्धवास्त्रातारो महतो भयादित्याहुः ॥ २५ ॥

अथादायादबन्धूनां सहोढ एव प्रथमः ॥ २६ ॥

या गर्भिणी संस्क्रियते सहोढः पुत्रो भवति ॥ २७ ॥

दत्तको द्वितीयः ॥ २८ ॥

यं मातापितरौ दद्याताम् ॥ २९ ॥

क्रीतस्तृतीयः ॥ ३० ॥

तच्छुनःशेपेन व्याख्यातम् ॥ ३१ ॥

हरिश्चन्द्रो वै राजा सोऽजीगर्तस्य सौयवसेः पुत्रं चिक्राय ॥ ३२ ॥

स्वयमुपागतश्चतुर्थः ॥ ३३ ॥

तच्छुनःशेपेन व्याख्यातम् ॥ ३४ ॥

शुनःशेपो वै यूपे नियुक्तो देवतास्तुष्टाव । तस्येह देवताः पाशं विमुमुचुस्तमृत्विज ऊचुः । ममैवायं पुत्रोऽस्त्विति तान्ह न संपेदे । ते संपादयामासुः । एष एव यं कामयेत्तस्य पुत्रोऽस्त्विति । तस्य ह विश्वामित्रो होतासीत्तस्य पुत्रत्वमियाय ॥ ३५ ॥

अपविद्धः पञ्चमः ॥ ३६ ॥

यं मातापितृभ्यामपास्तं प्रतिगृह्णीयात् ॥ ३७ ॥

शूद्रापुत्र एव षष्ठो भवतीत्याहुरित्येतेदायादबान्धवाः ॥ ३८ ॥

अथाप्युदाहरन्ति ।

यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यादेते तस्य दायं हरेरन्निति ॥ ३९ ॥

अथ भ्रातॄणां दायविभागः ॥ ४० ॥

---

32. हरिश्चन्द्रोह वै F. H. विक्रीय्य B. विक्रीय Ban. ed. विक्रांय Bh. E. F. H. विक्राय्य स्वयं क्रीतवान् Calc. ed. J. O. 913. 34 °उपनयतः B. F. H. 35. यूपेन B. Bh. E. H. 39. सर्वेषां धर्माणां न E. पूर्वेषां वर्णानां न Bh. F. H.

याश्चानपत्यास्तासामा पुत्रलाभात् ॥ ४१ ॥
द्व्यंशं ज्येष्ठो हरेत् ॥ ४२ ॥
गवाश्वस्य चानुदशमम् ॥ ४३ ॥
अजावयो गृहं च कनिष्ठस्य ॥ ४४ ॥
कार्ष्णायसं गृहोपकरणानि च मध्यमस्य ॥ ४५ ॥
मातुः पारिणेयं स्त्रियो विभजेरन् ॥ ४६ ॥
यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युः ॥ ४७ ॥
त्र्यंशं ब्राह्मण्याः पुत्रो हरेत् ॥ ४८ ॥
द्व्यंशं राजन्यायाः पुत्रः ॥ ४९ ॥
सममितरे विभजेरन् ॥ ५० ॥
येन चैषां स्वयमुत्पादितं स्याद् द्व्यंशमेव हरेत् ॥ ५१ ॥
अनंशास्त्वाश्रमान्तरगताः ॥ ५२ ॥
क्लीबोन्मत्तपतिताश्च ॥ ५३ ॥
भरणं क्लीबोन्मत्तानाम् ॥ ५४ ॥
प्रेतपत्नी षण्मासान्व्रतचारिण्यक्षारलवणं भुञ्जानाधः शयीत ॥ ५५ ॥
ऊर्ध्वं षड्भ्यो मासेभ्यः स्नात्वा श्राद्धं च पत्ये दत्त्वा विद्याकर्मगुरुयोनिसंबन्धान्संनिपात्य पिता भ्राता वा नियोगं कारयेत् ॥ ५६ ॥
न सोन्मादामवशां व्याधितां वा नियुञ्ज्यात् ॥ ५७ ॥
ज्यायसीमपि ॥ ५८ ॥
षोडश वर्षाणि ॥ ५९ ॥
न चेदामयावी स्यात् ॥ ६० ॥

---

47. यदि च E. H. 56. सन्नियोगं Ban. ed. H. 57. उन्मत्तां B, F. H. perhaps वशां to be read instead of अवशां of all the Mss.

प्रजापत्ये मुहूर्ते पाणिग्राहवदुपचरेदन्यत्र संप्रहास्य वाक्पारुष्यदण्डपारुष्याच्च ॥ ६१ ॥

ग्रासाच्छादनस्नानानुलेपनेषु प्राग्गामिनी स्यात् ॥ ६२ ॥

अनियुक्तायामुत्पन्न उत्पादयितुः पुत्रो भवतीत्याहुः ॥ ६३ ॥

स्याच्चेन्नियोगिनोः ॥ ६४ ॥

रिक्थलोभान्नास्ति नियोगः ॥ ६५ ॥

प्रायश्चित्तं वाप्युपदिश्य नियुञ्ज्यादित्येके ॥ ६६ ॥

कुमार्यृतुमती त्रीणि वर्षाण्युपासीत ॥ ६७ ॥

त्रिभ्यो वर्षेभ्यः पतिं विन्देत्तुल्यम् ॥ ६८ ॥

अथाप्युदाहरन्ति ।

पितुः प्रमादात्तु यदीह कन्या
वयःप्रमाणं समतीत्य दीयते ।
सा हन्ति दातारमुदीक्षमाणा
कालातिरिक्ता गुरुदक्षिणेव ॥ ६९ ॥

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥ ७० ॥

यावन्तः कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥ ७१ ॥

अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥ ७२ ॥

---

64. °नियोगिनो दृष्ट्वा Bh. E. F. H. 67. °उपसीतांध्र्वं B. H. 71. यावन्ति F. H.

बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ ७३ ॥
पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हतीति ॥ ७४ ॥

प्रोषितपत्नी पञ्च वर्षाण्युपासीत ॥ ७५ ॥

ऊर्ध्वं पञ्चभ्यो वर्षेभ्यो भर्तृसकाशं गच्छेत् ॥ ७६ ॥

यदि धर्मार्थाभ्यां प्रवासं प्रत्यनुकामा न स्याद्यथा प्रेत एवं वर्त्तितव्यं स्यात् ॥ ७७ ॥

एवं ब्राह्मणी पञ्च प्रजाताप्रजाता चत्वारि राजन्या प्रजाता पञ्चाप्रजाता त्रीणि वैश्या प्रजाता चत्वार्यप्रजाता द्वे शूद्रा प्रजाता त्रीण्यप्रजातैकम् ॥ ७८ ॥

अत ऊर्ध्वं समानार्थजन्मपिण्डोदकगोत्राणां पूर्वः पूर्वो गरीयान् ॥ ७९ ॥

न तु खलु कुलीने विद्यमाने परगामिनी स्यात् ॥ ८० ॥

यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यात्सपिण्डाः पुत्रस्थानीया वा तस्य धनं विभजेरन् ॥ ८१ ॥

तेषामलाभ आचार्यान्तेवासिनौ हरेयाताम् ॥ ८२ ॥

तयोरलाभे राजा हरेत् ॥ ८३ ॥

न तु ब्राह्मणस्य राजा हरेत् ॥ ८४ ॥

ब्रह्मस्वं तु विषं घोरम् ॥ ८५ ॥

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकमिति ॥ ८६ ॥

---

74. पाणिग्राहस्मृते E. 78. यत्प्राजाता instead of अप्रजाता E. H. 86. °पौत्रिक° B. F. H.

त्रैविद्यसाधुभ्यः संप्रयच्छेत्संप्रयच्छेदिति ॥ ८७ ॥

इति वासिष्ठधर्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

शूद्रेण ब्राह्मण्यामुत्पन्नश्चाण्डालो भवतीत्याहुः ॥ १ ॥
राजन्यायां वैणः ॥ २ ॥
वैश्यायामन्त्यावसायी ॥ ३ ॥
वैश्येन ब्राह्मण्यामुत्पन्नो रामको भवतीत्याहुः ॥ ४ ॥
राजन्यायां पुल्कसः ॥ ५ ॥
राजन्येन ब्राह्मण्यामुत्पन्नः सूतो भवतीत्याहुः ॥ ६ ॥
अथाप्युदाहरन्ति ।
छन्नोत्पन्नाश्च ये केचित्प्रातिलोम्यगुणाश्रिताः ।
गुणाचारपरिभ्रंशात्कर्मभिस्तान्विजानीयुरिति ॥ ७ ॥
एकान्तरद्व्यन्तरात्र्यन्तरासु जाता ब्राह्मणक्षत्रियवैश्यैरम्बष्ठो-
ग्रनिषादा भवन्ति ॥ ८ ॥
शूद्रायां पारशवः ॥ ९ ॥
पारशवो नेव जीवन्नेव शवो भवतीत्याहुः ॥ १० ॥
एके वा एतच्छ्मशानं ये शूद्राः ॥ ११ ॥
तस्माच्छूद्रसमीपे नाध्येतव्यम् ॥ १२ ॥
अथापि यमगीताञ्श्लोकानुदाहरन्ति ।
श्मशानमेतत्प्रत्यक्षं ये शूद्राः पापचारिणः ।
तस्माच्छूद्रसमीपे तु नाध्येतव्यं कदा च न ॥ १३ ॥

---

XVIII. 4. रेमकः B. Ban. ed. F. उत्पन्नास्तु B. Ban. ed. °न्विभावयु-रिति B. H. 8. °अनुजता B. E. H. 10. पारशवं नेव K. शव इति मृताख्यां thus all MSS., but it is an interpolation.

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ १४ ॥
यश्चास्योपदिशेद्धर्मं यश्चास्य व्रतमादिशेत् ।
सोऽसंवृत्तं तमो घोरं सह तेन प्रपद्यत इति ॥ १५ ॥
व्रणद्वारे कृमिर्यस्य संभवेत कदा च न ।
प्राजापत्येन शुध्येत हिरण्यं गौर्वासो दक्षिणा इति ॥ १६ ॥
नाग्निं चित्वा रामामुपेयात् ॥ १७ ॥
कृष्णवर्णा या रामा रमणायैव न धर्माय न धर्मायेति ॥ १८ ॥

इति वासिष्ठधर्मशास्त्रेऽष्टादशोऽध्यायः ॥१८ ॥

---

स्वधर्मो राज्ञः पालनं भूतानां तस्यानुष्ठानात्सिद्धिः ॥ १ ॥
भयकारुण्यहानं जरामर्यं वा एतत्सत्त्रमाहुर्विद्वांसः ॥ २ ॥
तस्माद्गार्हस्थ्यनैयमिकेषु पुरोहितं दध्यात् ॥ ३ ॥
विज्ञायते । ब्रह्मपुरोहितं राष्ट्रमृध्नोतीति ॥ ४ ॥
उभयस्य पालनात् ॥ ५ ॥
असामर्थ्याच्च ॥ ६ ॥
देशधर्मजातिकुलधर्मान्सर्वानेवैताननुप्रविश्य राजा चतुरो वर्णान्स्वधर्मे स्थापयेत् ॥ ७ ॥
तेष्वपचरत्सु दण्डं धारयेत् ॥ ८ ॥
दण्डस्तु देशकालधर्मवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्यः ॥ ९ ॥
आगमाद्दृष्टान्ताच्च ॥ १० ॥

---

15. सुखं वृतं E. F.

XIX. 2. This Sūtra seems to be faulty. 3. दद्यात्. F. H. 4. ऋध्यति॥ E. H. 9. कल्पः Ban. ed. कल्पाः Bh. E. H.

पुष्पफलोपगान्पादपान्न हिंस्यात् ॥ ११ ॥

कर्षणकारणार्थं चोपहन्यात् ॥ १२ ॥

गार्हस्थ्याङ्गानां च मानोन्माने रक्षिते स्याताम् ॥ १३ ॥

अधिष्ठानान्न नीहारः स्वार्थानाम् ॥ १४ ॥

मानमूल्यमात्रं नैहारिकं स्यात् ॥ १५ ॥

महामहयोः स्थानात्पथः स्यात् ॥ १६ ॥

संयाने दशवाहवाहिनी द्विगुणकारिणी स्यात् ॥ १७ ॥

प्रत्येकं प्रपाः स्युः ॥ १८ ॥

पुंसां शतावरार्ध्यं चाहवयेत् ॥ १९ ॥

अव्यर्थाः स्त्रियः स्युः ॥ २० ॥

कराष्टीला माषः शरमध्यापः पादः कार्षापणाः स्युः ॥ २१ ॥

निरुदकस्तरो मोष्यः ॥ २२ ॥

अकरः श्रोत्रियो राजपुमाननाथप्रव्रजितबालवृद्धतरुणप्रजाताः ॥ २३ ॥

प्राग्गामिकाः कुमार्यो भृतपत्न्यश्च ॥ २४ ॥

बाहुभ्यामुत्तरञ्छतगुणं दद्यात् ॥ २५ ॥

नदीकक्षवनदाहशैलोपभोगा निष्कराः स्युः ॥ २६ ॥

तदुपजीविनो वा दद्युः ॥ २७ ॥

प्रतिमाससमुद्वाहकरं त्वागमयेत् ॥ २८ ॥

राजनि च प्रेते दद्यात्प्रासङ्गिकम् ॥ २९ ॥

एतेन मातृवृत्तिर्व्याख्याता ॥ ३० ॥

---

11. °उपगान्यदेयानि F. H. 16. स्थानमन्यथा Bh. पयः F. H. 20. अप्य-प्याः B. F. 21. करोष्टौमो मीषः B. Ban. ed. करोन्द्रौ मामीषः E. करोष्टोमा माषाः Bh. H. 23. प्रदाताः thus all MSS., प्रदातारः Ban. ed. see XI., 7. 28. °उद्वाहकरैस्तु B. E, H.

राजमहिष्याः पितृव्यमातुलान्राजा बिभृयात् ॥ ३१ ॥
तद्बन्धूंश्चान्यांश्च ॥ ३२ ॥
राजपत्न्यो ग्रासाच्छादनं लभेरन् ॥ ३३ ॥
अनिच्छन्त्यो वा प्रव्रजेरन् ॥ ३४ ॥
क्लीबोन्मत्तान्राजा बिभृयात् ॥ ३५ ॥
तद्गामित्वाद्रिक्थस्य ॥ ३६ ॥
शुल्के चापि मानवं श्लोकमुदाहरन्ति ।
न भिन्नकार्षापणमस्ति शुल्के
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्षलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञ इति ॥ ३७ ॥
स्तेनोनुप्रवेशान्न दुष्यते ॥ ३८ ॥
शस्त्रधारी सहोढो व्रणसंपन्नो व्यपदिष्टस्त्वेकेषाम् ॥ ३९ ॥
दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् ॥ ४० ॥
त्रिरात्रं पुरोहितः ॥ ४१ ॥
कृच्छ्रमदण्ड्यदण्डने पुरोहितः ॥ ४२ ॥
त्रिरात्रं राजा ॥ ४३ ॥
अथाप्युदाहरन्ति ।
अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥ ४४ ॥ (मनौ ८।३१७॥)
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ४५ ॥ (मनौ ८।३१८॥)
कृतदण्डा इति च तत्र पाठः ।

39. °संपन्नस्य व्यपावष्टस्तु thus all MSS.

एनो राजानमृच्छति उत्सृजन्तं सकिल्बिषम् ।
तं चेद्वा घातयेद्राजा हन्ति धर्मेण दुष्कृतमिति ॥ ४६ ॥
राज्ञामात्ययिके कार्ये सद्यः शौचं विधीयते ।
तथा नात्ययिके नित्यं काल एवात्र कारणमिति ॥ ४७ ॥
यमगीतं चात्र श्लोकमुदाहरन्ति ।
नाद्य दोषोस्ति राज्ञां वै व्रतिनां न च सत्रिणाम् ।
ऐन्द्रस्थानमुपासीना ब्रह्मभूता हि ते सदेति ॥
हि ते सदेति ॥ ४८ ॥

इति वासिष्ठधर्मशास्त्रे एकोनविंशोऽध्यायः ॥ १९ ॥

---

अनभिसंधिकृते प्रायश्चित्तमपराधे ॥ १ ॥
अभिसंधिकृतेप्येके ॥ २ ॥
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यम इति ॥ ३ ॥
तत्र च सूर्याभ्युदितः सन्नहस्तिष्ठेत्सावित्रीं च जपेत् ॥ ४ ॥
एवं सूर्याभिनिर्मुक्तो रात्रावासीत् ॥ ५ ॥
कुनखी श्यावदन्तस्तु कृच्छ्रं द्वादशरात्रं चरेत् ॥ ६ ॥
परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेत्
॥ ७ ॥
अथ परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तां चैवोपयच्छेत् ॥ ८ ॥

---

46. तं चेद्घातयेत राजा राजधर्मेण दुष्यति F. H. घ्नान्त B. 48. नात्र E. H. मन्त्रिणं E. H.

XX. 4. °अभ्युदयितः B. Bh. E. H.

अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चोपयच्छेत् ॥ ९ ॥

दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् ॥ १० ॥

वीरहणं परस्ताद्वक्ष्यामः ॥ ११ ॥

ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात् ॥ १२ ॥

गुरुतल्पगः सवृषणं शिश्नमुद्धृत्याञ्जलावाधाय दक्षिणामुखो गच्छेद्यत्रैव प्रतिहन्यात्तत्र तिष्ठेदाप्रलयम् ॥ १३ ॥

निष्कालको वा घृताभ्यक्तस्तप्तां सूर्मीं परिष्वजेन्मरणात्पूतो भवतीति विज्ञायते ॥ १४ ॥

आचार्यपुत्रशिष्यभार्यासु चैवम् ॥ १५ ॥

योनिषु गुर्वीं सखीं गुरुसखीमपपात्रां पतितां च गत्वा कृच्छ्राब्दपादं चरेत् ॥ १६ ॥

एतदेव चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयनं वपनादीनां तु निवृत्तिः ॥ १७ ॥

मानवं चात्र श्लोकमुदाहरन्ति ।
वपनं मेखला दण्डो भैक्षचर्या व्रतानि च ।
एतानि तु निवर्तन्ते पुनःसंस्कारकर्मणीति ॥ १८ ॥

मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतं प्राश्य पुनःसंस्कारश्च ॥ १९ ॥

मूत्रशकृच्छुक्राभ्यवहारेषु चैवम् ॥ २० ॥

---

11. वोरणं B. Bh. E. 12. ब्रह्मघ्नः F. ब्रह्मोज्ञः E. H. ब्रह्मोक: B. Bh.
14. निष्कलङ्को वा घृताक्तस्ततां F. E. 16. योनिषु च F. H.

मद्यभाण्डे स्थिता आपो यदि कश्चिद्द्विजः पिबेत्पद्मोदुम्बरबिल्वपलाशानामुदकं पीत्वा त्रिरात्रेणैव शुध्यति ॥ २१ ॥

अभ्यासे तु सुराया अग्निवर्णां तां द्विजः पिबेन्मरणात्पूतो भवतीति ॥ २२ ॥

भ्रूणहनं वक्ष्यामो ब्राह्मणं हत्वा भ्रूणहा भवत्यविज्ञातं च गर्भम् ॥ २३ ॥

अविज्ञाता हि गर्भाः पुमांसो भवन्ति तस्मात्पुंस्कृत्या जुह्वतीति ॥ २४ ॥

भ्रूणहाग्निमुपसमाधाय जुहुयादेताः ॥ २५ ॥

लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासय इति प्रथमां । त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासय इति द्वितीयां । लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासय इति तृतीयां । मांसं मृत्योर्जुहोमि मांसेन मृत्युं वासय इति चतुर्थीं । स्नावानि मृत्योर्जुहोमि स्नावभिर्मृत्युं वासय इति पञ्चमीं । मेदो मृत्योर्जुहोमि मेदसा मृत्युं वासय इति षष्ठीं । अस्थीनि मृत्योर्जुहोम्यस्थिभिर्मृत्युं वासय इति सप्तमीं । मज्जानं मृत्योर्जुहोमि मज्जाभिर्मृत्युं वासय इत्यष्टमीमिति ॥ २६ ॥

राजार्थे ब्राह्मणार्थे वा संग्रामेभिमुखमात्मानं घातयेत् ॥ २७ ॥

त्रिरजितो वापराद्धः पूतो भवतीति विज्ञायते हि ॥ २८ ॥

निरुक्तं ह्येनः कनीयो भवतीति ॥ २९ ॥

---

21. पिबेत्प्लक्षमोदुम्बर °Ban. ed. 24. पुस्कृत B. H. पुरस्कृत्य Bh. E. H. 25. एता: wanted F. H. 26. वाशय B. F. प्रथम । द्वितीय and so on F. H. 27. शवार्थे F. 28. त्र्यरञ्जितो वापरार्द्धः Bh. E. त्रिराजितोव्यापराद्धः H. व्यापराधः F. this Sūtra seems to be corrupt, compare Āpast. Dh. I, 24, 21 and Gautama 22, 8.

तथाप्युदाहरन्ति ।

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेदिति ॥ ३० ॥

एवं राजन्यं हत्वाष्टौ वर्षाणि चरेत् ॥ ३१ ॥

षड् वैश्यम् ॥ ३२ ॥

त्रीणि शूद्रम् ॥ ३३ ॥

ब्राह्मणीं चात्रेयीं हत्वा सवनगतौ च राजन्यवैश्यौ ॥ ३४ ॥

आत्रेयीं वक्ष्यामो रजस्वलामृतुस्नातामात्रेयिमाहुः ॥ ३५ ॥

अत्र ह्येष्यदपत्यं भवतीति ॥ ३६ ॥

अनात्रेयीं राजन्यहिंसायाम् ॥ ३७ ॥

राजन्यां वैश्यहिंसायाम् ॥ ३८ ॥

वैश्यां शूद्रहिंसायाम् ॥ ३९ ॥

शूद्रां हत्वा संवत्सरम् ॥ ४० ॥

ब्राह्मणसुवर्णहरणे प्रकीर्य केशान्राजानमभिधावेत्स्तेनोऽसि भोः शास्तु मां भवानिति तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनात्मानं प्रमापयेन्मरणात्पूतो भवतीति विज्ञायते ॥ ४१ ॥

निष्कालको वा घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमभिदाहयेन्मरणात्पूतो भवतीति विज्ञायते ॥ ४२ ॥ शरीरम् इत्यर्थः ।

अथाप्युदाहरन्ति ।

पुरा कालात्प्रमीतानां पापाद्विविधकर्मणाम् ।
पुनरापन्नदेहानामङ्गं भवति तच्छृणु ॥ ४३ ॥
स्तेनः कुनखी भवति श्वित्री भवति ब्रह्महा ।
सुरापः श्यावदन्तस्तु दुश्चर्मा गुरुतल्पग इति ॥ ४४ ॥

---

36. ह्येष्वदम्पत्यं B. ह्येपामपत्यं E. H. ह्येष्यमपत्यं Bh. ह्यप्पदपलं F. 43. यथाप्युदाहरन्ति Bh. E.

पतितसंप्रयोगे च ब्राह्मेण वा यौनेन वा यास्तेभ्यः सकाशा-न्माता उपलब्धास्तासां परित्यागस्तैश्च न संवसेत् ॥ ४५ ॥
उदीचिं दिशं गत्वानश्नन्संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते ॥ ४६ ॥

तथाप्युदाहरन्ति ।
शरीरपरितापेन तपसाध्ययनेन च ।
मुच्यते पापकृत्पापाद्दानाच्चापि प्रमुच्यते ॥
इति विज्ञायते विज्ञायत इति ॥ ४७ ॥

इति वासिष्ठधर्मशास्त्रे विंशोऽध्यायः ॥ २० ॥

---

शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां कृष्णख-रमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ १ ॥
वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्रा-ह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां गौर-खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ २ ॥
राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्ये-द्ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां श्वेतखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ ३ ॥

एवं वैश्यो राजन्यायाम् ॥ ४ ॥

---

45. °संप्रयोगं च B. Bh. Ban. ed. XXI. 1. 2. 3. प्राश्येत् B. Ban. ed. H. वापनं Bh. E. H. सर्पिशाभ्यज्य B. H.

शूद्रश्च राजन्यावैश्ययोः ॥ ५ ॥

मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनं वा भुञ्जानाधः शयीतोर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्याष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ॥ ६ ॥

वाक्संबन्ध एतदेव मासं चरित्वोर्ध्वं मासादप्सु निमग्नायाः सावित्र्याश्चतुर्भिरष्टशतैः शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ॥ ७ ॥

व्यवाये तु संवत्सरं घृतपटं धारयेद्गोमयगर्ते कुशप्रस्तरे वा शयीतोर्ध्वं संवत्सरादप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ॥ ८ ॥

व्यवाये तीर्थगमने धर्मेभ्यस्तु निवर्तते ॥ ९ ॥

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥ १० ॥

या ब्राह्मणी च सुरापी न तां देवाः पतिलोकं नयन्तीहैव सा चरति क्षीणपुण्याप्सु लुग्भवति शुक्तिका वा ॥ ११ ॥

ब्राह्मणक्षत्रियविशां स्त्रियः शुद्रेण सङ्गताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥ १२ ॥

प्रतिलोमं चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम् ॥ १३ ॥

पतिव्रतानां गृहमेधिनीनां
सत्यव्रतानां च शुचिव्रतानाम् ।
तासां तु लोकाः पतिभिः समाना
गोमायुलोका व्यभिचारिणीनाम् ॥ १४ ॥

---

9. व्यवायतीर्थगमनधर्मेभ्यः Colebrooke IV., Dig. LXXVI., 10. प्रतिघ्नि तु B. F. H. 11. शूकरी वा Colebrooke IV., Dig. CXIII. 12. ते नराः F. H.

पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥ १५ ॥

ब्राह्मणश्चेदप्रेक्षापूर्वं ब्राह्मणदारानभिगच्छेदनिवृत्तधर्मकर्मणः कृच्छ्रो निवृत्तधर्मकर्मणोतिकृच्छ्रः ॥ १६ ॥

एवं राजन्यवैश्ययोः ॥ १७ ॥

गां चेद्धन्यात्तस्याश्चर्मणार्द्रेण परिवेष्टितः षण्मासान्कृच्छ्रं तप्तकृच्छ्रं वातिष्ठेत् ॥ १८ ॥

तयोर्विधिः ॥ १९ ॥

त्र्यहं दिवा भुङ्क्ते नक्तमश्नाति वै त्र्यहमपि ।
त्र्यहमयाचितव्रतस्त्र्यहं न भुगिति कृच्छ्रः ॥ २० ॥

त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षः परं त्र्यहम् ॥
इति तप्तकृच्छ्रः ॥ २१ ॥

ऋषभवेहतौ च दद्यात् ॥ २२ ॥

अथाप्युदाहरन्ति ।
त्रय एव पुरा रोगा ईर्ष्या अनशनं जरा ।
पृषद्ध्रस्तवयं हत्वा अष्टानवतिमाहरेदिति ॥ २३ ॥

श्वमार्जारनकुलसर्पदर्दुरमूषकान्हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यात् ॥ २४ ॥

अनस्थिमतां तु सत्त्वानां गोमात्रं राशिं हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यात् ॥ २५ ॥

अस्थिमतां त्वेकैकम् ॥ २६ ॥

---

16. ब्राह्मणश्चेत्प्रेक्षापूर्वं F. H. 23. वृषद्धस्तनयं Bh. Ban. ed.; वृषद्धस्तनयं F. H. प्रवधस्तनयं F. 24. 25. चरेच्च किंचित् B. Ban. ed. H.

योग्नीनपविध्येत्कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधानं कारयेत्
॥ २७ ॥

गुरोश्चालीकनिर्बन्धे सचैलं स्नातो गुरुं प्रसादयेत्प्रसादात्पूतो भवतीति विज्ञायते ॥ २८ ॥

नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात् ॥२९॥

नास्तिकवृत्तिस्त्वतिकृच्छ्रम् ॥ ३० ॥

एतेन सोमविक्रयी व्याख्यातः ॥ ३१ ॥

वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षे वर्धयेत्
॥ ३२ ॥

भिक्षुकैर्वानप्रस्थवत्सोमवृद्धिवर्धनं स्वशास्त्रसंस्कारश्च स्वशास्त्रसंस्कारश्चेति ॥ ३३ ॥

इति वासिष्ठधर्मशास्त्रे एकविंशोऽध्यायः ॥ २१ ॥

---

अथ खल्वयं पुरुषो मिथ्या व्याकरोत्ययाज्यं वा याजयत्यप्रतिग्राह्यं वा प्रतिगृह्णात्यनन्नं वाश्नात्यनाचरणीयमेवाचरति ॥१॥

तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते ॥ २ ॥

न कुर्यादित्याहुः ॥ ३ ॥

न हि कर्म क्षीयत इति ॥ ४ ॥

कुर्यादित्येव तस्माच्छ्रुतिनिदर्शनात् ॥ ५ ॥

---

27. चरित्वा विरमेन्नास्तिक्यात्पुनराधानं न कारयेत् F. विरमेन्नास्ति पुनराधानं Bh. E. H. न कारयेत् B. 28. गुरोश्चालीकं निवेद्य F. H. °निर्बन्धः B. Bh. perhaps it has to be read : अलीकं निवेद्य. 30. नास्तिक्यवृ° B. F. H. 33. वानप्रस्थवल्लोभवृद्धिवर्जं F. H.

XXII. 1. वाश्नात्यचरणीयेन वा चरति B. F. :H. 5. दर्शनात् B. Bh. F. The text appears here to be corrupt. After Sūtra 5 Baudhāyana III. 10, 6, and Gautama XIX. 7, read : पुनः स्तोमेन यजेत [ स्तोमेनेष्ट्वा Gaut. ] पुनः सवनमायान्तीति विज्ञायते, which Sūtra has

तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति ॥६॥
इति चाभिशस्तो गोसवेनाग्निष्टुता यजेत ॥ ७ ॥
तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम् ॥ ८ ॥
उपनिषदो वेदादयो वेदान्ताः सर्वच्छन्दःसंहिता मधून्यघमर्षण-मथर्वशिरो रुद्राः पुरुषसूक्तं राजनरौहिणे सामनी कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि ॥ ९ ॥
अथाप्युदाहरन्ति ।
वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च ।
सकृद्दतौ प्रयुञ्जानः पुनाति दशपूरुषमिति ॥ १० ॥
उपवासन्यायेन पयोव्रतता फलभक्षता प्रसृतयावको हिरण्य-प्राशनं सोमपानमिति मेध्यानि ॥ ११ ॥
सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थान्यृषि-निवासगोष्ठपरिष्कन्धा इति देशाः ॥ १२ ॥
संवत्सरो मासश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोहोरात्रा इति कालाः ॥ १३ ॥
एतान्येवानादेशे विकल्पेन क्रियेरन् ॥ १४ ॥
एनःसु गुरुषु गुरूणि लघुषु लघूनि ॥ १५ ॥

---

been left out. This omission caused the insertion of the words तस्माच्छ्रुतिनिदर्शनात् at the end of Sūtra 5. The proof that the sixth Sūtra of Baudhāyana has been accidently omitted is furnished by the fact that B.Bh.E.and H.read Sūtra 6 योऽश्वमे-धेन यजत इति च. This च has no meaning, except if another Vedic passage preceded Sūtra 6. See Buhler, Transl., pg. 116. 6. भ्रूणहत्यां Bh. E. H. 8. निष्क्रमणानि Bh. E.H. 10. ऋतावृतौ H.सामावृतौ Bh. सकृज्जप्तौ E. F. सप्तपूरुषं E. 11. उपासन्यायेन B. E. H. उपासन्न्यायेन Bh. उपन्न्यायेन F. 12. पुण्या वरतास्तर्थानि B. E. पुण्या नद्यस्तर्थानि F. गोष्ठपरिकन्दाः B. गोष्ठपरिष्कन्नाः Bh. F. H. ऋषिनिवासाः B.H. 14. एतान्येवानादेशविकल्पेन Bh. E. H.

कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तिः सर्वप्रायश्चित्ति-
रिति ॥ १६ ॥

इति वासिष्ठधर्मशास्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

---

ब्रह्मचारी चेत्स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं
गर्दभं पशुमालभेत् ॥ १ ॥
नैर्ऋतं वा चरुं निर्वपेत् ॥ २ ॥
तस्य जुहुयात्कामाय स्वाहा कामकामाय स्वाहा नैर्ऋत्यै स्वाहा
रक्षोदेवताभ्यः स्वाहेति ॥ ३ ॥
एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु वा समावर्त-
नात् ॥ ४ ॥
तिर्यग्योनिव्यवाये शुक्लमृषभं दद्यात् ॥ ५ ॥
गां गत्वा शूद्रावधेन दोषो व्याख्यातः ॥ ६ ॥
ब्रह्मचारिणः शवकर्मणो व्रतान्निवृत्तिः ॥ ७ ॥
अन्यत्र मातापित्रोः ॥ ८ ॥
स चेद्व्याधयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयात् ॥९॥
गुरुप्रयुक्तश्चेन्म्रियेत त्रीन्कृच्छ्रांश्चरेद्गुरुः ॥ १० ॥
ब्रह्मचारी चेन्मांसमश्नीयादुच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं च-
रित्वा व्रतशेषं समापयेत् ॥ ११ ॥
श्राद्धसूतकभोजनेषु चैवम् ॥ १२ ॥

---

XXIII. 1. आलभेत Bh. आलेभेत् E. H. 2. निर्ऋतं E. H. 4. एव रक्षसः E. 5. After this Sūtra B. F. H. read: कृष्णलिङ्गं दद्यात. 6. शुक्ललिङ्गं गां गत्वा B. F. H. 11. अश्नीयाच्छिष्टभोजनीयं B. H, संमाचरेत् Bh. E. H. 12. चैवमव F. H.

अकामतोपनतं मधु वाजसनेयके न दुष्यतीति विज्ञायते ॥ १३ ॥
य आत्मत्याग्यभिशस्तो भवति सपिण्डानां प्रेतकर्मच्छेदः ॥ १४ ॥
काष्ठजललोष्टपाषाणशस्त्रविषरज्जुभिर्य आत्मानमवसादयति स आत्महा भवति ॥ १५ ॥

अथाप्युदाहरन्ति ।
य आत्मत्यागिनः कुर्यात्स्नेहात्प्रेतक्रियां द्विजः ।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतमिति ॥ १६ ॥
चान्द्रायणं परस्ताद्वक्ष्यामः ॥ १७ ॥
आत्महननाध्यवसाये त्रिरात्रम् ॥ १८ ॥
जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत्त्रिरात्रं ह्युपवसेन्नित्यं स्निग्धेन वाससा प्राणानात्मनि चायम्य त्रिः पठेदघमर्षणमिति ॥ १९ ॥

अपि वैतेन कल्पेन गायत्रीं परिवर्तयेत् ॥ २० ॥
अपि वाग्निमुपसमाधाय कूष्माण्डैर्जुहुयाद्घृतम् ॥ २१ ॥
यच्चान्यन्महापातकेभ्यः सर्वमेतेन पूयत इति ॥ २२ ॥
अथाप्याचमेदग्निश्च मा मन्युश्चेति प्रातर्मनसा पापं ध्यात्वोंपूर्वाः सत्यान्ता व्याहृतीर्जपेदघमर्षणं वा पठेत् ॥ २३ ॥
मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचम् ॥ २४ ॥
अस्निग्धे त्वहोरात्रम् ॥ २५ ॥
शवानुगमने चैवम् ॥ २६ ॥

---

13. अकामोपनतं K. कामापन्नं Bh. E. H. अकामतोपनं F. A gloss in B. refers to Śūlapāṇi's Prāyaśchittaviveka, 112. 20. चैतेन F. H. 21. चाग्निं B. F. H. 23. ध्यात्वा B. E. F. H.

अधीयानानामन्तरागमनेहोरात्रमभोजनम् ॥ २७ ॥

त्रिरात्रमाभिषेको विवासश्चान्योन्येन ॥ २८ ॥

श्वमार्जारनकुलशीघ्रगाणामहोरात्रम् ॥ २९ ॥

श्वकुक्कुटग्राम्यशूकरकङ्कगृध्रभासपारावतमानुषकाकोलूकमांसादने सप्तरात्रमुपवासो निष्पुरीषीभावो घृतप्राशः पुनः संस्कारश्च ॥ ३० ॥

ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य ततः शुचिरिति ॥ ३१ ॥

कालोऽग्निर्मनसः शुद्धिरुदकार्कावलोकनम् ।
अविज्ञानं च भूतानां षड्विधा शुद्धिरिष्यत इति ॥ ३२ ॥

श्वचाण्डालपतितोपस्पर्शने सचैलं स्नातः सद्यः पूतो भवतीति विज्ञायते ॥ ३३ ॥

पतितचाण्डालारावश्रवणे त्रिरात्रं वाग्यता अनश्नन्त आसीरन् ॥ ३४ ॥

सहस्रपरमं वा तदभ्यसन्तः पूता भवन्तीति विज्ञायते ॥ ३५ ॥

एतेनैव गर्हिताध्यापकयाजका व्याख्याता दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते ॥ ३६ ॥

एतेनैवाभिशस्तो व्याख्यातः ॥ ३७ ॥

भ्रूणहत्यायां द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत् ॥ ३८ ॥

---

27. आधीयानमन्तराग° F. H. 28. अभिशेखः B. अभिषिक्तो F. 30. °सूकर° B. Ban. ed. वङ्क instead of कङ्क B. Ban. ed. °भासवायसपा° B. Ban. ed. Bh. E. F. H. °काकोलूकानां सादने B. Ban. ed. Bh. E. F. H. 32. °उदकाग्न्यनलेखनं B. F. उदक्यान्यत्र लेखनं H. 34. °चाण्डालाशववहने E. 35. वा नन्दभ्यः सन्तः F. H. तदभ्यस्यन्तः B. 38. अथापरं भ्रूण B. F. H.

ब्राह्मणमनृतेनाभिशंस्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्तयेत् ॥ ३९ ॥

अश्वमेधावभृथं वा गच्छेत् ॥ ४० ॥

एतेनैव चाण्डालीव्यवायो व्याख्यातः ॥ ४१ ॥

अथापरः कृच्छ्रविधिः साधारणो व्यूढः ॥ ४२ ॥

अहः प्रातरहर्नक्तमहरेकमयाचितम् ।
अहः पराकं तन्त्वैकमेवं चतुरहौ परौ ॥
अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह ॥ ४३ ॥

अथ चान्द्रायणविधिः ॥ ४४ ॥

मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश ।
ग्रासोपचयभोजी स्यात्पक्षशेषं समापयेत् ॥
एवं हि शुक्लपक्षादौ ग्रासमेकं तु भक्षयेत् ।
ग्रासापचयभोजी स्यात्पक्षशेषं समापयेत् ॥ ४५ ॥

अत्रैव गायेत्सामानि अपि वा व्याहृतीर्जपेत् ॥ ४६ ॥

एष चान्द्रायणो मासः पवित्रमृषिसंस्तुतः ।
अनादिष्टेषु सर्वेषु प्रायश्चित्तं विधीयते ॥
विधीयत इति

इति वासिष्ठधर्मशास्त्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अथातिकृच्छ्रः ॥ १ ॥

त्र्यहं प्रातस्तथा सायमयाचितं पराक इति कृच्छ्रो यावत्सकृदाददीत तावदश्नीयात्पूर्ववत्सोतिकृच्छ्रः ॥ २ ॥

---

43° वृद्धातुरेश्चैव E. 46. अथ वा E,
XXIV. 1. अथातः कृच्छ्रः B. F, H.

कृच्छ्रोऽम्भक्षः स कृच्छ्रातिकृच्छ्रः ॥ ३ ॥

कृच्छ्राणां व्रतरूपाणि ॥ ४ ॥

श्मश्रुकेशान्वापयेद्भ्रूवोक्षिलोमशिखावर्जं नखान्निकृत्यैकवासोऽनिन्दितभोजी [ सकृद्भैक्षमनिन्दितं ] त्रिषवणमुदकोपस्पर्शी दण्डी कमण्डलुः स्त्रीशूद्रसंभाषणवर्जी स्थानासनशीलोऽहस्तिष्ठेद्रात्रावासीतेत्याह भगवान्वसिष्ठः ॥ ५ ॥

स तद्यदेतद्धर्मशास्त्रं नापुत्राय नाशिष्याय नासंवत्सरोषिताय दद्यात् ॥ ६ ॥

सहस्रं दक्षिणा ऋषभैकादशा गुरुप्रसादो वा गुरुप्रसादो वेति ॥७॥

इति वासिष्ठधर्मशास्त्रे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

अविख्यापितदोषाणां पापानां महतां तथा ।
सर्वेषां चोपपापानां शुद्धिं वक्ष्याम्यशेषतः ॥ १ ॥

आहिताग्नेर्विनीतस्य वृद्धस्य विदुषोपि वा ।
रहस्योक्तं प्रायश्चित्तं पूर्वोक्तमितरे जनाः ॥ २ ॥

प्राणायामैः पवित्रैश्च दानैर्होमैर्जपैस्तथा ।
नित्ययुक्ताः प्रमुच्यन्ते पातकेभ्यो न संशयः ॥ ३ ॥

प्राणायामान्पवित्राणि व्याहृतीः प्रणवं तथा ।
पवित्रपाणिरासीनो ब्रह्म नैत्यकमभ्यसेत् ॥ ४ ॥

---

5. °वांसानिन्दित° B. Ban. ed. H. कमण्डलुं B. Bh. E. H. F.; the text appears to be corrupt, the compound in brackets is undoubtedly a gloss. 6. सतयानुदेति धर्म° B. Bh. E. सतयानुदेत धर्म H. यातयानुदेति F. सतपा नुदति Ban. ed., perhaps it has to be read सते or सता यत्तूदितं धर्म° compare Baudh. 4, 4, 9 तदेतद्धर्म°.

XXV. 1. प्रविख्यापित° F. H. 2. अहस्तु प्रायश्चित्तं तु F. 4. प्राणायामाः पवि° B. Ban. ed. F. H.

आवर्तयन्सदा युक्तः प्राणायामान्पुनः पुनः ।
आ लोमाग्रान्नखाग्राच्च तपस्तप्यतु उत्तमम् ॥ ५ ॥
निरोधाज्जायते वायुर्वायोरग्निर्हि जायते ।
तापेनापोथ जायन्ते ततोन्तः शुध्यते त्रिभिः ॥ ६ ॥
न तां तीव्रेण तपसा न स्वाध्यायैर्न चेज्यया ।
गतिं गन्तुं द्विजाः शक्ता योगात्संप्राप्नुवन्ति याम् ॥ ७ ॥
योगात्संप्राप्यते ज्ञानं योगो धर्मस्य लक्षणम् ।
योगः परं तपो नित्यं तस्माद्युक्तः सदा भवेत् ॥ ८ ॥
प्रणवे नित्ययुक्तस्स्याद्व्याहृतीषु च सप्तसु ।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥ ९ ॥
प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥ १० ॥
एकाक्षरं परं ब्रह्म पावनं परमं स्मृतम् ॥ ११ ॥
सर्वेषामेव पापानां सङ्करे समुपस्थिते ।
अभ्यासो दशसाहस्रः सावित्र्याः शोधनं महत् ॥ १२ ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
स उच्यत इति ॥ १३ ॥

इति वासिष्ठधर्मशास्त्रे पञ्चविंशोध्यायः ॥ २५ ॥

---

प्राणायामान्धारयेत्त्रीन्यो यथाविध्यतन्द्रितः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ १ ॥

---

5. आवर्तयेत् B. F. H. तपस्तप्यतमुत्तमं B. Bh. F. H. तपस्तप्यातु उत्तमं Ban. ed. 7. चेष्टया F. H. 9. नित्ययुक्तस्य न भंत्र त्रियते B. Ban ed. F. H. 10. प्रणवाद्यास्तपः E. 11. पावमानं परं स्मृतं B. F.

कर्मणा मनसा वाचा यदह्ना कृतमैनसम् ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति ॥ २ ॥
कर्मणा मनसा वाचा यद्रात्र्या कृतमैनसम् ।
उत्तिष्ठन्पूर्वसन्ध्यां तु प्राणायामैर्व्यपोहति ॥ ३ ॥
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ ४ ॥
जप्त्वा कौत्समपेत्येतद्वासिष्ठं च त्रिचं प्रति ।
माहित्रं शुद्धवत्यश्च सुरापोपि विशुध्यति ॥ ५ ॥
सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च ।
सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः ॥ ६ ॥
हविष्यन्तीयमभ्यस्य न तमंह इति त्रिचं ।
सूक्तं च पौरुषं जप्त्वा मुच्यते गुरुतल्पगः ॥ ७ ॥
अपि वाप्सु निमज्जानस्त्रिर्जपेदघमर्षणम् ।
यथाश्वमेधावभृथस्तादृशं मनुरब्रवीत् ॥ ८ ॥
आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । (मनौ २।८५॥) तत्र विधि-
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ ९ ॥ यज्ञादिति पाठः।
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ १० ॥ (मनौ २।८६॥)
जाप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ११ ॥ (मनौ २।८७॥)

---

XXVI. 2. यदह्नात् E. कृतमानसः F. H. कृतमानसां B. कृतमैनसां Ban. ed. प्रथमां संन्ध्यां E. F. H. 3. यद्रात्र्यात् E. After this Sūtra B. Bh. E. F. H. read.; प्राणायामैर्य आत्मानं संयम्यास्ते पुनः पुनः । सद्दशद्व्यधिकैर्वापि द्विगुणैर्वा परं तु यः ॥ शद्दशद्व्य° Bh. H. सन्द्ध्यान्धाधि°. E. सन्द्ध्याद्व्य° F. 5. च तृचं Bh. E. F. सावित्रं. B. F. 7. अभ्यसेन्न B. E. F. इतीति च B. Bh. E. इतीत्यृचं F. H. 8. त्रिः पठत्° F. H. 9. विधियज्ञाज्जपयज्ञः Manu II., 85; Vishṇu LV., 19. 11. जप्येनैव Bh. E. F. H. कुर्यादन्यत्र वा E. F.

जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम् ।
न परिवसन्ति पापानि ये च स्नाताः शिरोव्रतैः ॥ १२ ॥
यथाग्निर्वायुना धूतो हविषा चैव दीप्यते ।
एवं जाप्यपरो नित्यं ब्राह्मणः संप्रदीप्यते ॥ १३ ॥
स्वाध्यायाध्यायिनां नित्यं नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चापि विनिपातो न विद्यते ॥ १४ ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
शुद्धिकामः प्रयुञ्जीत सर्वपापेष्वपि स्थितः ॥ १५ ॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपैर्होमैर्द्विजोत्तमः ॥ १६ ॥
यथाश्वा रथहीनाः स्यू रथो वाश्वैर्विना यथा ।
एवं तपस्त्वविद्यस्य विद्या वाप्यतपस्विनः ॥ १७ ॥
यथान्नं मधुसंयुक्तं मधु वान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥ १८ ॥
विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम् ।
सदापि पापकर्माणमेनो न प्रतियुज्यते ॥
एनो न प्रतियुज्यत इति ॥ १९ ॥

इति वासिष्ठधर्मशास्त्रे षड्विंशोऽध्यायः ॥ २६ ॥

---

यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते ।
सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥ १ ॥

---

13. यथाग्निर्वायुनोद्धूतः F. H. जाप्यपरः F. H. 14. चैव instead of चापि B. F. H. 16. जपहोमैः° B. F. H. 17. रथा वाश्वैर्यथा विना B. F. H. 18. चान्नेन F. H. भषज F. H.

XXVII. 1. यद्यकार्यकृतं त्यागं E. सर्वं तु तस्य F.

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदाग्निः कर्मजं दोषमात्मनः ॥ २ ॥
हत्वापि स इमाँल्लोकान्भुञ्जानोपि यतस्ततः ।
ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ॥ ३ ॥
न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् ।
अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् ॥ ४ ॥
तपस्तप्यति योरण्ये मुनिर्मूलफलाशनः ।
ऋचमेकां च योधीते तच्च तानि च तत्समम् ॥ ५ ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ ६ ॥
वेदाभ्यासोन्वहं शक्त्या महायज्ञक्रियाक्रमः ।
नाशयत्याशु पापानि महापातकजान्यपि ॥ ७ ॥
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्त्या प्राप्नोति परमां गतिम् ॥ ८ ॥
याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात् ।
विप्रेषु न भवेद्दोषो ज्वलनार्कसमो हि सः ॥ ९ ॥
शङ्कास्थाने समुत्पन्ने अभोज्यभोज्यसंज्ञके ।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥ १० ॥
अक्षारलवणां रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम् ।
त्रिरात्रं शङ्खपुष्पीं च ब्राह्मणः पयसा सह ॥ ११ ॥
पलाशबिल्वपत्राणि कुशान्पद्मानुदुम्बरान् ।
क्राथयित्वा पिबेदापस्त्रिरात्रेणैव शुध्यति ॥ १२ ॥

---

2. वातबलः F. वदज्ञः H. 3. नैनमाप्नोति. H. 4. नेतरम्. E. F. H. 5. °फलाशिनः E. H. 7. °क्रियाक्षमः B. F. H. 8. °यथाशक्ति F. H. 9. यजनाध्यापंनाद्दानात्तथैव B F. 10. अभोज्यभक्ष. H. 11. रूढां. F. H.

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ॥ १३ ॥
गोमूत्रं गोमयं चैव क्षीरं दधि घृतं तथा ।
पञ्चरात्रं तदाहारः पञ्चगव्येन शुध्यति ॥ १४ ॥
यवान्विधिनोपयुञ्जानः प्रत्यक्षेणैव शुध्यति ।
विशुद्धभावे शुद्धाः स्युरशुद्धे तु सरागिणः ॥ १५ ॥
हविष्यान्प्रातराशांस्त्रीन्सायमाशांस्तथैव च ।
अयाचितं तथैव स्यादुपवासत्रयं भवेत् ॥ १६ ॥
अथ चेत्त्वरते कर्तुं दिवसं मारुताशनः ।
रात्रौ जलाशये व्युष्टः प्राजापत्येन तत्समम् ॥ १७ ॥
सावित्र्यष्टसहस्रं तु जपं कृत्वोत्थिते रवौ ।
मुच्यते पातकैः सर्वैर्यदि न ब्रह्महा भवेत् ॥ १८ ॥
यो वै स्तेनः सुरापो वा भ्रूणहा गुरुतल्पगः ।
धर्मशास्त्रमधीत्यैव मुच्यते सर्वपातकैः ॥ १९ ॥
दुरितानां दुरिष्टानां पापानां महतां तथा ।
कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनम् ॥ २० ॥
एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् ।
अमावास्यां न भुञ्जीत एवं चान्द्रायणो विधिः ॥
एवं चान्द्रायणो विधिरिति ॥ २१ ॥

इति वासिष्ठधर्मशास्त्रे सप्तविंशोऽध्यायः ॥ २७ ॥

---

13. शौचयंत् H. 17. जलस्थितः B. F. H. 18. न भ्रूणहा. Bh. E. H, नो ब्रह्महा B. Ban. ed. नाब्रह्महा. F.

न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
नापो मूत्रपुरीषेण नाग्निर्दहनकर्मणा ॥ १ ॥
स्वयं विप्रतिपन्ना वा यदि वा विप्रवासिता ।
बलात्कारोपभुक्ता वा चोरहस्तगतापि वा ॥ २ ॥
न त्याज्या दूषिता नारी नास्यास्त्यागो विधीयते ।
पुष्पकालमुपासीत ऋतुकालेन शुध्यति ॥ ३ ॥
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ४ ॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ।
गच्छन्ति मानुषान्पश्चान्नैता दुष्यन्ति धर्मतः ॥ ५ ॥
तासां सोमोददच्छौचं गन्धर्वः शिक्षितां गिरम् ।
अग्निश्च सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥ ६ ॥
त्रीणि स्त्रियः पातकानि लोके धर्मविदो विदुः
भर्तृवधो भ्रूणहत्या स्वस्य गर्भस्य पातनम् ॥ ७ ॥
वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने ।
स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥ ८ ॥
अजाश्वा मुखतो मेध्या गावो मेध्यास्तु सर्वतः ॥ ९ ॥
सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥ १० ॥
अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।
कूष्माण्डानि पावमान्यो दुर्गासावित्रिरेव च ॥ ११ ॥

---

XXVIII. 1. चारेण B. F. 2. बलात्कारेण भुक्ता. E. H. चौरं F. H. 5. पश्चाम्र च दुष्यन्ति F. H. 6. सर्वभक्षत्वं B. F. H. 7. भर्तृवधः F. H. 8. फलशातने F. H. वत्सो मध्यावने मेध्यः H. 11. शुद्धवत्यरतत्समा. Bh. E. H.

अतीषङ्गाः पदस्तोभाः सामानि व्याहृतीस्तथा ।
भारुण्डानि सामानि च गायत्रं रैवतं तथा ॥ १२ ॥
पुरुषव्रतं च भासं च तथा देवव्रतानि च ।
अब्लिङ्गं बार्हस्पत्यं तु वाक्सूक्तं मध्वृचस्तथा ॥ १३ ॥
शतरुद्रियमथर्वशिरस्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तं चाश्वसूक्तं च शुद्धाशुद्धीये सामनी ॥ १४ ॥

त्रीणाज्यदोहानि रथन्तरं च
अग्नेर्व्रतं वामदेव्यं बृहच्च ।
एतानि जप्तानि पुनन्ति जन्तू-
ञ्जातिस्मरत्वं लभते यदीच्छेत् ॥ १५ ॥
अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
तासामनन्तं फलमश्नुवीत
यः काञ्चनं गां च महीं च दद्यात् ॥ १६ ॥

उपरुन्धन्ति दातारं गौरश्वः कनकं क्षितिः ।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥ १७ ॥
वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च वा ।
तिलान्क्षौद्रेण संयुक्तान्कृष्णान्वा यदि वेतरान् ॥ १८ ॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ १९ ॥

---

12. अभिषङ्गाः B. Ban. ed. भारुण्डानि. B Ban. ed. भाडानि E. Bh and F. omit this Sūtra and 13a. 13. चत्वारं च E. अग्निगं B. Ban. ed. अष्टलिङ्ग. F. अब्लिङ्गाः Bh. H. वाक्सूक्तमनृचस्तथा. E. वाक्सूक्तमरुचस्तथा H. 14. महापथं व्रत H. शुद्धं शुद्धेन Bh. E. F. H. इन्द्रशुद्धे B. Ban. ed. चन्द्रसूक्ते and चन्द्रशुद्धे Vishṇu LV. 20. 15. रथाङ्गरं B. F. 16. तासामनन्त्यं F. H. 17. उपरुदन्ति दातारं. B. Ban. ed. E. उपरुन्दन्ति Bh. F. H. हस्तं दृष्ट्वा E. निराकृताः Bh. F. H. 18. च instead of तु B. H.

सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गजम् ।
तिलैः प्रच्छाद्य यो दद्यात्तस्य पुण्यफलं शृणु ॥ २० ॥
ससुवर्णगुहा तेन सशैलवनकानना ।
चतुर्वक्त्रा भवेद्दत्ता पृथिवी नात्र संशयः ॥ २१ ॥
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतमिति ॥
सर्वं तरति दुष्कृतमिति ॥ २२ ॥

इति वासिष्ठधर्मशास्त्रेऽष्टविंशोऽध्यायः ॥ २८ ॥

---

दानेन सर्वान्कामानवाप्नोति ॥ १ ॥
चिरजीवित्वं ब्रह्मचारी रूपवान् ॥ २ ॥
अहिंस्युपपद्यते स्वर्गम् ॥ ३ ॥
अग्निप्रवेशाद्ब्रह्मलोकः ॥ ४ ॥
मौनात्सौभाग्यम् ॥ ५ ॥
नागाधिपतिरुदकवासात् ॥ ६ ॥
नी निरुजः क्षीणकोषः ॥ ७ ॥
तोयदः सर्वकामसमृद्धः ॥ ८ ॥
अन्नप्रदाता सुचक्षुः स्मृतिमान् ॥ ९ ॥
मेधावी सर्वतोभयदाता ॥ १० ॥
गोप्रयुक्ते सर्वतीर्थोपस्पर्शनम् ॥ ११ ॥ स्नानमित्यर्थः ।
शय्यासनदानादन्तःपुराधिपत्यम् ॥ १२ ॥
छत्रदानाद्गृहलाभः ॥ १३ ॥

---

20. °मार्गणं F. H. 21. °गुहोपेता H.
XXIX. 1. सर्वकामान् B. F. H.

गृहप्रदो नगरमाप्नोति ॥ १४ ॥
उपानत्प्रदाता यानमासादयते ॥ १५ ॥
अथाप्युदाहरन्ति ।
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्षितः ।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ १६ ॥
विप्रायाचमनार्थं तु दद्यात्पूर्णकमण्डलुम् ।
प्रेत्य तृप्तिं परां प्राप्य सोमपो जायते पुनः ॥ १७ ॥
अनडुहां सहस्राणां दत्तानां धूर्यवाहिनाम् ।
सुपात्रे विधिवद्दानं कन्यादानेन तत्समम् ॥ १८ ॥
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
अतिदानं हि दानानां विद्यादानं ततोधिकम् ॥ १९ ॥
आत्यन्तिकफलप्रदं मोक्षसंसारमोचनम् ।
योनसूयुरिमं विद्वानाचारमनुवर्तते ॥ २० ॥
श्रद्दधानः शुचिर्दान्तो धारयेच्छृणुयादपि ।
विहाय सर्वपापानि नाकपृष्ठे महीयत इति ॥
नाकपृष्ठे महीयत इति ॥ २१ ॥

इति वासिष्ठधर्मशास्त्रे एकोनत्रिंशोध्यायः॥ २९ ॥

---

धर्मं चरत माधर्मं सत्यं वदत मानृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत मापरम् ॥ १ ॥
ब्राह्मणो भवत्यग्निः ॥ २ ॥

---

14. नगजं E. 18. दशानां H. विधिदत्तानां B. Ban. ed. F. H. 19. त्रीण्याहुरिति दानानि E. आदिदानं हिरण्यानां F. 20. औत्पत्तिकफल°. H. योगिनां संपूरितं विद्वान् B. Ban. ed. योगिनां संमर्त E. योनसंयुरिम F. H.

अग्निर्वै ब्राह्मण इति श्रुतेः ॥ ३ ॥

तच्च कथम् ॥ ४ ॥

तत्र सदो ब्राह्मणस्य शरीरं वेदिः संकल्पो यज्ञः पशुरात्मा रशना बुद्धिः सदो मुखमाहवनीयं नाभ्यामुदरोग्निर्गार्हपत्यः प्राणोध्वर्युरपानो होता व्यानो ब्रह्मा समान उद्गातात्मेन्द्रियाणि यज्ञपात्राणि य एवं विद्वानिन्द्रियैरिन्द्रियार्थं जुहोतीत्यपि च–काठके विज्ञायते ॥ ५ ॥

अथाप्युदाहरन्ति ।

पाति त्राति च दातारमात्मानं चैव किल्बिषात् ।
वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु ॥ ६ ॥

न स्कन्दते न व्यथते नैनमध्यापतेच्च यत् ।
वरिष्ठमग्निहोत्रात्तु ब्राह्मणस्य मुखे हुतम् ॥ ७ ॥

ध्यानाग्निः सत्योपचयनं क्षान्त्याहुतिः
स्रुवं ह्रीः पुरोडाशमहिंसा संतोषो ।
यूपः कृच्छ्रं भूतेभ्योभयदाक्षिण्यमिति
कृत्वा क्रतु मानसं याति क्षयं बुधः ॥ ८ ॥

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीवनाशा धनाशा च जीर्यतोपि न जीर्यति ॥ ९ ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
यासौ प्राणान्तिको व्याधिस्तां तृष्णां त्यजतः सुखमिति ॥ १० ॥

---

XXX. 5. काठे विज्ञायते H. 6. याति E. 7. नैनमध्याचते च यः B. Ban. ed. न विनश्यति कर्हिचित् Manu VII., 84. नैवमध्यापतेच्च यः F. 8. क्षान्त्यापुष्टि B. Ban. ed.

नमोस्तु मित्रावरुणयोरुर्वश्यात्मजाय शतयातवे वसिष्ठाय वसिष्ठायेति ॥ ११ ॥

इति वासिष्ठधर्मशास्त्रे त्रिंशोध्यायः ॥ ३० ॥

॥ समाप्तं चेयं श्रीवासिष्ठधर्मशास्त्रम् ॥

---

# APPENDIX

This Appendix contains a complete collection of quotations from Vasishṭha's Dharmaśāstra found in Vijñāneśvara's Mitāksharā (Mit. ed. Bomb. śāka 1785), Aparārka's Yājñavalkīyadharmaśāstranibandha ( Ap. MS. ), Nandapaṇḍita's Vaijayantī (Vaij. MS. ), Devāṇḍabhaṭṭa's Smṛitichandrikā (Sm. Ms.), Nīlakaṇṭha's Vyavahāramayūkha (May. ed.Bomb. A. D. 1880), Mitramiśra's Vīramitrodaya (Vīr. Khidirapura, śāke 1737), Mādhavāchārya's Parāśarasmṛtivyākhyā (Mādh. MS.), and Kamalākara's Vivādatāṇḍava (Kam. MS.)

A. Quotations which occur in the present edition :- -

अथ भ्रातृणां दायविभागो याश्चानपत्याः स्त्रियस्तासामा पुत्रलाभात् ॥ *a*

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ *b*

तृतीयः पुत्रिकैव ॥ *c*

द्वितीयः पुत्रः पुत्रिकैव ॥ *d*

पौनर्भवश्चतुर्थः ॥ *e*

येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव हरेत् ॥ *f*

अनंशास्त्वाश्रमान्तरगताः ॥ *g*

अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्च । भरणं क्लीबोन्मत्तानाम् ॥ *h*

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ *i*

---

*a*) Vas. XVII., 40–41 ; Mit. ch. II., I. 52, p. 1 ; Vīr. I. 182, p. 2; May. 38, 6, 7 ; Mādh., Kam., Ap.

(*b*) Vas. XVII., 17; Mit. II., 1. 55, p. 1 ; Vīr. I. 185, p. 1; May. 38, 25, 26 ; Kam. Vaij.

(*c*) Vas. XVII., 15 ; Mit. ch. II., I. 55, p. 1 ; Ap. Vaij. May. 38, 27.

(*d*) Vīr. I. 185. p. 2.

(*e*) Vīr. 188. p. 1. Vaij.

(*f*) Vas. XVII., 51. May. 47, 25 ; Vaij.

(*g*) Vas. XVII., 52 ; Mit. II., 61, 2 ; Vīr. 221, 2 ; May, 64, 5 ; Kam.

(*h*) Vas. XVII., 52–54; May. 64, 21 ; Ap. Vaij. Mit. II. 61, 2 ; Vīr. 221, 2, Kam.

(*i*) Vas. III., 16 ; Mit. ch. II., 10, p. 2 ; Vīr. 6, 2. Vaij. Ap. May. 91, 7.

राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्त्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येदेवं वैश्यो राजन्यायां मैथुनमाचरञ्छूद्रस्तु राजन्यवैश्ययोः ॥ *j*

B. Quotations which go by the name of Vasishṭha, but are not found in our MSS.

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १ ॥
समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैरेव यत्कार्यं वक्तव्यं तत्पृथक्पृथक् ॥ २ ॥
भिन्नकाले तु यत्कार्यं विज्ञातं यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेषः प्रकीर्तितः ॥ ३ ॥
अथ चेदनृतं ब्रूयात्सर्वतो मिथ्यलक्षणम् ।
मृतो नरकमायाति तिर्यगच्छत्यसंशयम् ॥ ४ ॥
शूकरो दश वर्षाणि दश वर्षाणि गर्दभः ।
श्वा चैव दश वर्षाणि भासो वा निजविंशतिम् ॥ ५ ॥
कृमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दश वर्षाणि जायते मानवस्ततः ॥ ६ ॥
मानुष्यं तु यदाप्नोति मूकोन्धस्तु भवेद्धि सः ।
पामरो जायते पश्चात्स परित्यक्तबान्धवः ॥ ७ ॥
पंग्वन्धबधिरी मूकः कुष्ठी नग्नः पिपासितः ।
बुभुक्षितः शत्रुगृहे भिक्षते भार्यया सह ॥ ८ ॥
ज्ञात्वैतानन्रृते दोषान्क्षान्त्वा सत्ये च सद्गुणान् ।
श्रेयस्करमिहान्यत्र सत्यं साक्ष्ये वदेदतः ॥ ९ ॥
लौकिकं राजकीयं च लेख्यं द्विधाद्विलक्षणम् ।
राजकीयं चतुर्भेदनष्टभेदं तु लौकिकम् ॥ १० ॥
चिरकं च स्वहस्तं च तथापगतसंज्ञितम् ।
आधिपत्त्रं चतुर्थं च पञ्चमं क्रयपत्त्रकम् ॥ ११ ॥
षष्टं तु स्थितिपत्त्राख्यं सप्तमं सन्धिपत्त्रकम् ।
विशुद्धिपत्त्रकं चैवमष्टधा लौकिकं स्मृतम् ॥ १२ ॥
चिरकं नाम लिखितं पुराणैः पौरलेखकैः ।
अर्थिप्रत्यर्थिनिर्दिष्टैर्यथासंभवसंस्कृतैः ॥ १३ ॥

---

(*j*) Vas. XXI., 3 ; Vaij. Kam.
1. Vīr 37, 13; Ap. Vaij. Kam.
2–3 Vīr. 168, 19 ; May. 15, 25 ; Ap. Vaij.
4–9. Vīr. 170. 171 ; Sm. Ap.
10. May. 9, 24 ; Sm. Ap. Vīr. 197.
11–12. Vīr. 197, Sm. Ap.
13–14. Sm. Ap. Vaij.

स्वकीयैः पितृनामाद्यैरर्थिप्रत्यर्थिसाक्षिणाम् ।
प्रतिनामभिराक्रान्तमार्थिसाक्षिस्वहस्तवत् ।
स्पष्टावगतसंयुक्तं यथास्मृत्युक्तलक्षणम् ॥ १४ ॥
राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥ १५ ॥
शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् ।
आज्ञाप्रज्ञापनपत्रे राजकीयं चतुर्विधम् ॥ १६ ॥
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु वा ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥ १७ ॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु च ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥ १८ ॥
पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रं विशोधयेत् ॥ १९ ॥
यथोपन्यस्तसाध्यार्थं संयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमुच्यते ॥ २० ॥
प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम् ॥ २१ ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथालेख्यं विधौ तद्वत्स्वहस्तं तत्र दापयेत् ॥ २२ ॥
कालं निवेश्य राजानं स्थानं निवसितं तथा ।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम् ॥ २३ ॥
जातिं स्वगोत्रं शाखां च द्रव्यमाधिं स संख्यकम् ।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणौ ॥ २४ ॥
तुल्यकाले निसृष्टानां लेख्यानामाधिकर्माणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥ २५ ॥
यद्येकदिवसे तौ तु भोक्तुकामावुपागता ।
विभज्याधिः समस्तत्र भोक्तव्य इति निश्चयः ॥ २६ ॥
सामान्योयं धर्मसेतुर्नृपाणां
काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामभद्रः ॥ २७ ॥

---

15–18. May. 11, 10; Vir. 196; Sm. Ap. Vaij.
19. Sm. Mādh. Ap.
20–21. Vir. 195, 1; Mit II., 33; Sm.
22. Mit. II. 33; Sm. Ap.
23–24. Vir. 191; Sm. Ap.
25. May 67, 16: Vir. 311, Ap.
26. May. 67; Vir 96; Sm.
27. Ap. Vaij Kam.

रुणद्धि रोदसी चास्य यावत्कीर्तिस्तरस्विनी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ २८ ॥
ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठतो वृद्धिः कालाच्चिरकृतस्य तु ॥ २९ ॥
दन्तचर्मास्थिशृङ्गाणां मृन्मयानां तथैव च ।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च ॥ ३० ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ ३१ ॥
ज्येष्ठस्यांशोधिको देयः कनिष्ठस्य वरः स्मृतः ।
समांशभाजः शेषाः स्युरप्रत्ता भगिनी तथा ॥ ३२ ॥
भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह ।
न तत्र विषमं भागं पिता दद्यात्कथं चन ॥ ३३ ॥

---

28. Ap. Vaij. Kam.
29. Vīr. 299 ; Ap.
30. Vīr. 300 ; Ap. Vaij.
31. Vīr. 644 : Ap. Vaij.
32. Vīr. 561 ; Vaij. Kam.
33. Vīr. 562 ; Ap. Sm.

# INDEX TO THE VEDIC MANTRAS

*Quoted in Vasishṭha's Dharmaśāstra.*

[ This Index does not include short sacrificial formulas and invocations, and those mantras which are quoted by their names only, such as *e. g.* Aghamarshaṇa, Devakṛta, &c. See the references in Prof. Bühler's translation. ]